

# राष्ट्रिय संस्कृत संस्थानम्
नवदेहली

गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ ग्रन्थमाला

॥ ४१ ॥

# कालीपूजापद्धतिः

सम्पादकः

डॉ० प्रकाशपाण्डेयः



Rashtriya Sanskrit Sansthan

*( Under the auspices of the Ministry of Human Resources Development, Govt. of India )*

**New Delhi**



**Ganganatha Jha**

**Kendriya Sanskrit Vidyapitha**

**TEXT SERIES**



*General Editor*

**Dr. G. C. Tripathi**



# No. 41

# KĀLĪ-PŪJĀ PADDHATI

*A Work on the ritual of worship of goddess Kālī according to 'left path'.*

*Critically edited by*

Dr. Prakash Pandey




ALLAHABAD

1995

राष्ट्रियसंस्कृतसंस्थानम्
( केन्द्रीयमानवसंसाधनविकासमन्त्रालयस्याङ्गभूतम् )
नवदेहली

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला

प्रधानसम्पादकः

डॉ० गयाचरण त्रिपाठी

—•—

एकचत्वारिंशं प्रसूनम्

—•—

# कालीपूजापद्धतिः

—•—

सम्पादकः

डॉ० प्रकाश पाण्डेय

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आजाद पार्क
इलाहाबाद–२११००२
१९९५

# कालीपूजापद्धतिः

[ विस्तृतभूमिकया परिशिष्टादिभिर्विभूषिता ]

•

सम्पादकः

डॉ० प्रकाश पाण्डेय



श्रीगङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्

चन्द्रशेखर आज़ाद पार्क

प्रयाग-२११००२

१९९५ ई०

# FOREWORD

The Vidyapeetha feels great pleasure in publishing the present work named *Kalī Pūjāpaddhatī* and placing it in the hands of the devotees of the Supreme Mother *Kālī* as well as the scholars of Tantra. The text of this work is mainly based on Manuscripts material preserved in the collection of our Institute. It is the assumption of the able Editor of this text that this work was composed by someone who lived in the neighbourhood of Vindhyachal (Dist. Mirzapur in U. P.) and had close connections with the Vindhyavāsinī Temple there.

The work describes the procedure of worship of of the goddes Kālī cccording to the *Vamācāra* or the socalled 'left school'. The worship of Kālī with the five *Ma-kāras* is not only commonly accepted but also highly praised in this system. The works dealing with the worship of the Mother with the five *Ma-kāras* are kept highly confidential by the Sādhakas and are not usually made public. The rites and the ritual of the worship is a closely guarded secret known and explained only to the initiated ones. I believe that such an esoteric work

is seeing the light of the day for the first time through this publication.

Dr. Prakash Pandey of our Institute is not only an erudite scholar of Tantra and Veda but also a Sādhaka who has been ordained and duly initiated into the practice of this form of worship by a renowned Guru. There could, therefore, be no other person better suited to carry out this difficult job than Dr. Pandey. He has accomplished this job to the best of his capabilities and has left no stone unturned for making this work valuable for the scholars by embellishing it with various useful appendices.

I thank him for this arduous job and shower my blessings upon him. I hope that the publication of this work shall be welcomed by the lovers and devotees of Parāmbā Kālī, the eternal and universal Mother.

G. N. Jha K. S. Vidyapeetha — G. C. Tripathi
Allahabad — *Principal*
20th of March, 1995

# प्रास्ताविकम्

इह प्रापञ्चिकप्रतानसन्तानोरितितीर्षया जन्तवः आसर्गाद्बहुविधयोगोपासनचिन्तनरताः बहु यतमानास्सन्तीतिहाससिद्धम् । तत्र दुःखत्रयाभिघातापघातकेषूपायेषु वैदिककर्मकाण्डसांख्यबौद्धबार्हस्पत्यादिदर्शनस्मार्तोपासनभक्त्यादिषु यथारुचिकृताभिनिवेशाः साधकाः स्वाभिप्रायं सिसाधयिषन्ति । अत्र सर्वेषूपायेषु परमार्थसाधनस्य या त्विया सर्वान् स्पृशत्यप्यतिशेते सा तन्त्रविद्येति विपश्चितां मतस्वारस्यम् ।

तन्त्रं नामेतिकर्तव्यता । किञ्चेतिकर्तव्यतानुशासनम् । सेतिकर्तव्यता सर्वशास्त्रसम्बद्धा दृश्यते । सा च योगसाधनायाः दण्डनीतेर्वायुश्शास्त्रीया वा स्यात् । सर्वत्रैव तत्तद्विद्यासाधनभूतेतिकर्तव्यतानुष्ठानमेव तत्तद्विद्या जीवितभूतमिति सुस्पष्टम् । किञ्च कोशादौ सिद्धान्तश्रुतिशाखेतिकर्तव्यताप्रबन्धशास्त्रविशेषादिपर्यायेषु, तन्त्रवार्तिककपिलतन्त्र-गौतमतन्त्राग्निवेशतन्त्राद्युद्देशेषु, 'प्रजाः स्वा तन्त्रयित्वेत्यादि (अभि० शा० ५/५) प्रयोगेषु तन्त्रपदसंकेतितं लक्षयन्ति शिष्टाः ।

सर्वशास्त्राणां व्यवहाराणां च प्राणभूतं तन्त्रं शास्त्रविशेषत्वेन रहस्यशास्त्रमन्त्रशास्त्रागमनामभिर्लोके विश्रुतम् । तस्य दृष्टिभेदाद्यथाविभाग आचार्यैर्विहितस्तथा संग्रहेणात्रोद्दिश्यते । प्राधान्येन देशभेदेनावस्थाभेदेनव्यवस्थाभेदेन च तन्त्र-भेदः परम्परयोपलभ्यते । तद्यथा—

१. देशभेदेन—विष्णुक्रान्त-रथक्रान्ताश्वक्रान्तगजक्रान्तेति चतुर्धा ।

२. अवस्था-भेदेन-सदागमासदागमेति द्विधा, आस्तिकनास्तिकभेदेनापि द्विधा वदन्त्याधुनिकाः ।

३. व्यवस्थाभेदेन—कादिहादिकहादीति त्रिधा, स्रोतः पीठाम्नायेति वा त्रिधा ।

विशेषमाहवृद्धस्वच्छन्दनाथः—

सगर्भाश्चैव निर्गर्भा निर्वीजान्तरगर्भकाः
आस्तिकानास्तिकाश्चान्या समाश्च विषमास्तथा ।
कीलितोऽकीलिताश्चान्या समस्तव्यस्तसङ्कुलाः ।
सस्फुराविस्फुराश्चान्या हृतवीर्याश्च दारिताः ॥
.... ... ... ... ....
एते चान्ये च बहव उक्तान्युक्तान्यनेकशः ॥

(वृद्धस्वच्छन्दसंग्रहः १/३३-३५ । अप्रकाशिता मातृका कश्मीराल्लब्धा, गङ्गानाथ झा के० सं० विद्यापीठे फिल्मरूपेण रक्षिता तत उद्धृतोऽयमंशः) ।

स्रोतोभेद एव सर्वेषामुपभेदानां समाहारः स्याच्छम्भोरेव सप्तस्रोताननत्व-स्वीकारात् । यथोक्तं वृद्धस्वच्छन्दे—

सप्तस्रोताननं नाना भीमवक्त्रंकपालिनम् ।
पराशक्तिसमायुक्तं महाप्रेतासनस्थितम् ॥
(४/२५)

अपि च—

अनादिनिधनं ब्रह्म सप्तस्रोतं जगद्गुरुम् ॥
(४/३०)

तन्त्राणां सप्तस्रोतसां वर्णनमपि वृद्धस्वच्छन्दे समाम्नातम् । नामानि यथा—स्वच्छन्द-महाचिपिटनाथ-कुलमार्तण्डभैरवाजवक्त्रभरितभैरव-हेरुक-श्रीकण्ठभैरवाः इति । विशेषवर्णनं वृद्धस्वच्छन्दे (४/३७-४५) द्रष्टव्यम् ।

तन्त्रादीनां स्रोतस्सम्बद्धत्वं यथा वृद्धस्वच्छन्द एव—

तन्त्रार्थं दक्षिणस्रोता श्रीमतार्थं तु पश्चिमा ।
कुलार्थं चोत्तराद्भद्रे कौलार्थं पूर्वतः प्रिये
यामलार्थमधःस्रोता क्रमार्थमजवक्त्रजा ।
अजस्योर्ध्वात्समुत्पन्नं निरीहं तु निरास्तिकम् ।
(वृ० स्व० ४/५७-५८)

पीटसम्बद्धत्वं यथा—

तत्त्वपीठमजस्रोता तस्योर्ध्वाद्योगपीठकम् ।
मुद्रापीठं तु वै पूर्वे मन्त्रपीठं तु दक्षिणे ।।
विद्यापीठोत्तराज्जातं मण्डलाख्यं तु पश्चिमात् ।
शक्तिपीठमधोवक्त्रात्तथान्यं शाम्भवानघे ।

(वृ० स्व० ४/५१ ६०)

एवमेव यामल डामरतन्त्रागमेति चत्वारः शास्त्रप्रकारा उक्ताः । तन्त्रपदेन प्रायेण शाक्तशास्त्रं गृह्यते । तन्निगमरहस्यसंहितार्णवाद्यपरपर्यायेणापि प्रसिद्धम् ।

अथास्य शास्त्रस्य प्रवर्तनकालविषये जनिभूमिविषये च बहुविवदन्ते नूत्नाः पाश्चात्यानामैतिह्यपरामर्शपद्धतेर्ग्रहणात् भारतीयविद्यायाः कालनिरपेक्षस्वभावाग्रहाच्च । किन्तु न कोऽपि निर्णयः तन्त्राणां कालनिर्धारकः जनिभूम्यभिज्ञापको वा व्यपोहितसर्वशङ्काकलङ्कावकाशः दृश्यतेऽद्य यावत् । विषयेऽस्मिन् कृतश्रमाणां मतस्वारस्यं प्रासङ्गिकत्वादत्रोपस्थाप्यते संग्रहेण ।

तन्त्राणामुद्भवं सावंत्सरिककलनायां कलयितुं यतमानाः वर्गद्वये विभक्तास्सन्ति गवेषकाः । तत्र प्रथमवर्गीयाः यथोपलब्धग्रन्थादिप्रमाणेन कल्पयन्ति कालम् । अपरे च ग्रन्थेषूपलब्धसामग्रीं यथामतिपरीक्ष्य व्याहरन्ति किञ्चित् । यथा च—

म० म० हरप्रसादशास्त्रिणोगात्ताः काश्चन मातृकाः गुप्तयुगे विलिखिताः इति लिपिः प्रमाणयति । तासु प्राचीनतमा कुब्जिकामततन्त्रस्यमातृकाद्यापि सुरक्षिताऽस्ति कालिकातानगरे । भागवतपुराणे तन्त्राणां नाम्ना स्मरणसत्वेऽपि केचन भागवतस्य स्वकल्पितकालमुरीकृत्य तन्त्राणि पञ्चमशतकाब्दकालखण्डे खीष्टीये जातानीतिवदन्ति । तथापि, राजसिंहवर्मदेवस्य (७०० ई०) शिलालेखे शैवागमानामुल्लेखः, कम्बोजदेशीयस्य राज्ञः रूढोक-काकथोम इतिनामधेयस्य (८०० ई०) शिलाभिलेखे च शिरश्छेदविनासिखसम्मोहनयोत्तरेतिचतुर्णां तन्त्राणां नाम्नोल्लेखः, श्रीमच्छङ्करार्यकृतप्रपञ्चसार-शाक्तामोद-

---

1. Nepal Catalogue 1 PP. 10, 85, 117.
2. तत्रैव । Ariatic Society, Culcutta.

सौन्दर्यलहर्यादिग्रन्थाः, बाणभट्टभवभूत्यादिमहाकवीनां वर्णितानि[1] च तन्त्राणां सुबद्धसाहित्यत्वेन प्राचीनतरत्वमिङ्गयन्ति । किञ्च गान्धारदेशात् संप्राप्ते प्रस्तराभिलेखे (४२३-४२४ ई०) "तन्त्रोद्भूत" 'डाकिनीसंप्रकीर्णे'त्यादिप्रयोगात्, बृहत्संहितायां (४७५-५५० ई०) मातृणां मूर्तिविधानात्, विष्णुपुराणे महाभारते च दुर्गास्तुत्युपलम्भान्न कोऽपि तन्त्रसाहित्यस्य प्राचीनत्वं निराकर्तुमीशते ।

केचन तु नामलिङ्गानुशासने तन्त्रपदाभावात्, वेदबहिष्कृतानामेव तन्त्रे गतिरिति सूतसंहिता-(मुक्तिखण्ड) वचनान्नाटचशास्त्रे नाडीचक्रनादादिवर्णनाभावात् तन्त्राणां प्रानीनभारते लोकस्वीकरणत्वं तत्सत्वञ्च नोररी कुर्वन्ति । परं च सिद्धान्तोऽयं प्राक्तनसाहित्य-वर्णितान्युपेक्ष्य प्रस्थापितत्वादविचारितवाक्यत्वादुपेक्षितः संजातः । महाभारतादिषु[2] अर्थशास्त्रादिषु[3] तान्त्रिकसपर्यायाः प्रमाणोपलम्भात् तान्त्रिकग्रन्थानां जनिकालनिर्णयाभावाच्च नेत्थन्तयोद्गदितुं शक्यते विषयेऽस्मिन् ।

वस्तुतस्तु रहस्यविद्यायाः कालातीतत्वात्सांवत्सरिककालगणना कालयापनमात्रपरिणामिनी भवति । भागवते (११.३.४७, ४८, ११.११.३७, १२.११.२) देवीभागवते (११.१.२५, ११.१.४८, १६.७६, १६.८८-१०२, ३.६) पाद्मे (६/८५/२६) मात्स्ये (२६६/२८) विष्णुधर्मोत्तरे (१/२२६, २३७) आग्नेये (२७/८१-८७) तान्त्रिकपूजापद्धतेः सुस्पष्टवर्णनात्, आथर्वणसंहितायाञ्च शान्तिपुष्टिकर्मणः विवेचनात्[4] तान्त्रिकाचारस्य प्रतिष्ठा सुप्रमाणिता भवति । श्रुतिवत् तन्त्राण्यपीश्वरवचनानीत्याप्तवचनान्येव । यथोक्तं—

आगतं शिववक्त्रात्तु गतं च गिरिजामुखे ।। इति ।

---

१. द्र० हर्षचरितम्-काणे-१ पृ० १०, २५, ५०
कादम्बरी-काले पृ० २६
मालतीमाधवम्-कपलाभरणापूजोपक्रमवर्णनम् । इत्यादि ।

२. वनपर्व ६, विराट २३, हरि० ५८, ११६

३. कौ० ४/३/४०-४१, ५.२.४१, १३.२.२१-३५.

४. द्र.अथर्ववेदे शान्तिपुष्टिकर्माणि—डॉ० माया मालवीय, सं० वि० वि, वाराणसी, १९६७.

मनुव्याख्यातृणा कुलूकभट्टेनोक्तं—

"वैदिकीतान्त्रिकी चैव द्विविधा श्रुतिः कीर्तिता"[1] इति। किञ्च तन्त्रेषु तान्त्रिक-विद्यायाः वेदातिशायित्वमप्युक्तं, तद्यथा—

निगमादागमो जात आगमाद्यामलो भवेत्।
यामलाद्वेदसंजातं वेदाज्जातं पुराणकम्॥
पुराणात् स्मृतिसंजातं स्मृतेः शास्त्राणि यानि च।
तानि गृह्याणि यत्नेन चोत्तमं हि क्रमोत्क्रमात्॥

(सर्वोल्लासतन्त्रम् १/२१-२२)

एवमेव पिंगलामतादिषु[2] तन्त्राणां शास्वतत्वं ज्ञानरूपत्वं तन्त्रत्वञ्च निर्वचनमुखेन समुपस्थापितम्। यथा—

आङ्भावस्तु समन्ताच्च गम्यतेत्यागमो मतः।
शस्यते त्रायते यस्मात् तस्माच्छास्त्रमुदाहृतम्॥
ज्ञायते नयते येन ज्ञानं तेनाभिधीयते।
तनुते त्रायते नित्यं तन्त्रमित्थं विदुर्बुधाः॥

एवं हि सद्ग्रन्थप्रामाण्यात् तन्त्राणां ग्राह्यत्वं प्राचीनत्वं सन्मार्गप्रवर्तकत्वं स्थितमेव। विशेषश्चात्र सर्ववर्णाधिकारित्वम्। यथोक्तं-देवीपुराणे—

आगमोक्तेन मार्गेण स्त्रीशूद्रैरपि पूजनम्॥

जयद्रथयामले[3] तु स्पष्टमेवोक्तम्, यथा—

तैलिकानां गृहं गत्वा कुम्भकारगृहं तु वा।
तत्र तत्पतिभिः सार्धं यजेत् परमेश्वरीम्॥
इति चतुर्थवर्णानामपरिहार्यत्वं प्रतिपादितम्।

**कादिहादिक्रमः—**

यद्यपि सन्ति हि नैकाः भेदाः तान्त्रिकसम्प्रदायस्य किन्तु शाक्तानां प्राधान्येन

---

१. शक्ति एण्ड शाक्त, वूड्रफ्, मद्रास, १९५१, पृ० १४४।

२. स्टडीज इन तन्त्राज पी० सी० बागची०, भा० १, पृ० १०६।

३. स्टडीज, इन तन्त्राज, पृ० १२२।

कादि क्रमे हादिक्रमे कुत्रचिच्च कहादिक्रमे[1] वर्गीकरणं भवति । यथोक्तं आगमरहस्ये (भा० १, श्लो० ६९-७०)

कादिः काली महाशक्तिः हादिस्त्रिपुरसुन्दरी ।
कादित्वाद् ब्रह्मरूपत्वं हादित्वाच्छिवरूपता ।।

तत्र कादिक्रमे प्राधान्येन-कालीतारारक्तकालीभुवनेश्वरीमहिषमर्दिनीत्रिपुरादुर्गा-प्रत्यङ्गिराद्याः देव्य उपास्याः । हादि क्रमे च त्रिपुरसुन्दरीभैरवीबालाबगलाधूमावती-मातङ्गीस्वप्नावतीमहाकालीमधुमत्याद्या उपास्याः ।

स्थानभेदादपि शाक्तानां क्रमभेदः प्रसिद्धः । यथा—

आर्यावर्तं समारभ्य समुद्रान्तं महेश्वरि ।
केरलाख्यः क्रमः प्रोक्तस्तूनविंशति देशके ।
नेपालदेशमारभ्य कालिङ्गान्तं महेश्वरि ।
अष्टादशसु देशेषु गौडमार्गः प्रकीर्तितः ।
तदन्यद्देशे देवेशि काश्मीराख्यः क्रमः शुभः ।

(आ० र० भा० २, पृ० २०)

किञ्चैतेषामपि शिवाद्युग्रादिभेदेन एकैकस्य नव भेदा उक्ताः—

शैवकेरलकं देवि शक्तिकेरलकं तथा ।
शिवशक्तिकेरलाख्यं त्रितयं परिकीर्तितम् ।।
शुद्धोग्रगुप्तभेदेन नवधा केरलं भवेत् ।
नवधा चैव काश्मीरं नवधा गौडमेव हि ।।

(तत्रैव पृ० १९)

सर्वेषां पूर्वोक्तानां सम्प्रदायानामुपासनाक्रमः आम्नाय-भेदेन विशिष्यते आम्नायस्तु षट्संख्यः । पूर्व-पश्चिम-दक्षिणोत्तरोर्ध्वानुत्तरभेदेन[२] । अत्रापि वाम-दक्षिणमार्गभेदात् पूजाभेदः देवताभेदश्च प्रपञ्चितः —

---

१. द्र० शक्ति एण्ड शाक्त पृ० १६७.

२. आगम रह० भा० । श्लोक ७८-८९.

कालिकाषोडशीतारा वामाचारप्रिया मता ।
छिन्नमस्ता च बगला च वाममार्गाधिदेवता ।
मातङ्ग्यपि महादेवी वाममार्गेण सिद्धिदा ।
कमलाभुवनाबाला तथा धूमावती शिवे ।
दक्षिणाचार योगेन सिद्धन्त्येव न संशयः ॥
वामाचारेण च तथा सिद्धिदा भवतिध्रुवम् ।
भैरवी वामसन्तुष्टा बालादक्षिणवामतः ॥
(आ० र० भा० २ श्लो० ७०६-७०९)

एवं हि काश्चन वाममार्गविधिपूज्याः काश्चनदक्षिणमार्गविधिपूज्याः काश्चन चोभय-मार्गविधिपूज्याः कथिताः शास्त्रकारैः ।

अस्माकं ग्रन्थस्य प्राणभूता उत्तराम्नायवाममार्गोपास्या आदिशक्तिरूपा भगवती काली अनादिनिधनस्य कालस्य जीवितभूता प्रतिपादिता शास्त्रेषु । यथोक्तं महानिर्वाण-तन्त्रे (४/३१-२२)

कलनात् सर्वभूतानां महाकालः प्रकीर्तितः ।
महाकालस्यकलनात् त्वमाद्या कालिकापरा ॥
कालसंग्रसनात् काली सर्वेषामादिरूपिणी ।
कालत्वादादिभूतत्वादाद्याकालीति गीयते ॥

अपि च बृहन्नीले (१३/२)--

यामाद्यां प्रकृतिं प्राहुः कालीं कालस्वरूपिणीम् ॥ इति ।

आद्यायाः तात्त्विकस्वरूपाख्यानं शक्तिसंगमे ताराखण्डे (२/४०-४२) इत्थमुपलभ्यते--

महाप्रलयके जाते ततः शून्यं भविष्यति ।
ब्रह्मरूपा परानन्दा केवलातारिणी परा ।
सर्वं तस्यां तु संलीनं तद्रूपं सर्वमेव तु ।
एवं देवि महाशून्ये महादक्षिणकालिका ॥
व्याप्य तिष्ठति देवेशि शून्यं कृष्णस्वरूपकम् ॥

---

१. विशेषः द्र० आ० र० भा० २, पृ० ७-१० ।

महाशून्यावस्थाव्यापिनी सा ततोऽपि परतरा व्यापिका काचिदचिन्त्या शक्तिरेवेति स्पष्टम् । सर्वात्मकः कालः तामाश्रित्य विश्वोन्मीलननिमीलनक्षमः जायते । उक्तं हि—

तामाश्रित्यमहायोगी संहरत्यखिलं जगत् ।।

(निर्वाणतन्त्रम् १/२८)

गुह्यकाल्युपनिषदि काल्याः परात्वं प्रतिपादितम् । तद्यथा—

इन्द्रियेभ्यः पराह्यर्था ह्यर्थेभ्यश्चपरं मनः ।
मनसस्तु पराबुद्धिर्बुद्धेरात्मामहान् परः ।।
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषात्तु परादेवी सा काष्ठा सा परागतिः ।।

(गुह्यकाल्युपनिषद् ४१-४२)

सैव सर्वात्मिका सर्वरूपा च—

सा चैवाग्निः सा च सूर्यः सा वायुः सा च चन्द्रमाः ।
सा चैव शक्रः सा ब्रह्म सा चापः सा प्रजापतिः ।
सा चैव स्त्री पुमान् सा कुमारः कुमारिका ।। इति ।

(तत्रैव ५२)

पिण्डे सा महाकुण्डलिनीरूपेति कालिकोपनिषत् प्रतिपादयति—

"अथ हैनां ब्रह्मरंध्रे ब्रह्मरूपिणीमाप्नोति ।" इति वचनात् ।

योगभूमिकायां यथा कादिक्रमाधिष्ठातृशक्तिश्रीत्रिपुरसुन्दर्याः वर्णनं सौन्दर्यलहर्यादिषु मणिद्वीपेश्वरीरूपेणोपलभ्यते तद्वदेव निर्वाणतन्त्रे (१०/२१-२८) आद्यायाः स्वरूपचिन्तनमुपलभ्यते—

पद्ममध्ये बीजकोषे भुवनानि चतुर्दश ।
स्थानं बहुविधाकारं सर्वदेवस्य चाश्रयम् ।।
तन्मध्ये सत्यलोकं महारुद्रस्य कारणम् ।
दशकास्तेन स्वर्गेण निर्मितं चक्रपाणिना ।।
बिक्षु तोयमण्डलं च यथा पूर्णेन्दुमण्डलम् ।
परितः पारिजातानि मध्ये कल्पतरुः पुनः ।।

कल्पवृक्षस्यनिकटे ज्योतिर्मण्डलमुत्तमम् ।
उद्यदादित्यसङ्काशं चतुर्द्वारविभूषितम् ॥
गन्धवायुसमायुक्तं गन्धधूमैरलङ्कृतम् ॥
तन्मध्ये वेदिका देवि रत्नसिंहासनं प्रिये ।
महाकाली परमात्मा चणकाकाररूपतः ॥
माययाच्छादितात्मानं महाविष्णुः स एव हि ।
महाब्रह्म स एवात्मा नाममात्रविभेदतः ।
एका मूर्ति त्रयं नाम ब्रह्मविष्णुमहेश्वराः ॥

इयमचिन्त्यस्वरूपात्मिका भगवतीकाली सृष्टेरादिमध्यावसानभूता सर्वदेवात्मिका-ब्रह्मरूपिणी उपास्यभावे उपासकानां कल्याणाय नानारूपेषु व्यज्यते । यथोक्तं महा-निर्वाणे (५/१४०) ।

अरूपायाः कालिकायाः कालमातुर्महद्युतेः ।
गुणक्रियानुसारेण क्रियते रूपकल्पना ॥

कुत्रचित्कालं वीक्ष्य स्मेरानना विलसति यथा तत्रैव—

मेघाङ्गीं शशिशेखरां त्रिनयनां रक्ताम्बरं बिभ्रतीम् ॥
पाणिभ्यामभयं वरं च विलसद्रक्तारविन्दस्थिताम् ।
नृत्यन्तं पुरतोऽपनीय मधुरं माध्वीकमद्यं महा-
कालं वीक्ष्य विकासिताननवरामाद्यां भजे कालिकाम् ॥

(महा० नि० ५/१४१)

क्वचिद्वामवर्त्मानुयायिनः तस्याः घोरं रूपं पश्यन्ति । यथा मूले—

करालवदनां घोरां मुक्तकेशीं चतुर्भुजाम् ।
कालिकां दक्षिणां दिव्यां मुण्डमालाविभूषिताम् ॥
सद्यश्छिन्नशिरः खड्गं वामाधोर्ध्वकराम्बुजाम् ।
अभयं वरदं चैव दक्षिणाधोर्ध्वपाणिकाम् ।
महामेघप्रभां श्यामां तथा चैव दिगम्बराम् ॥
कण्ठावसक्तमुण्डालीं गलद्रुधिरचर्चिताम् ।
कर्णावतंसतां नीतं शवयुग्मभयानकाम् ।
घोरदंष्ट्रां करालास्यां पीनोन्नतपयोधराम् ।

शबानां कर संघातैः कृतकाञ्चीं हसन्मुखीम् ।
सृक्वद्वयगलद्रक्तधारां विस्फुरिताननाम् ॥
घोररूपां महारौद्रीं श्मशानालय वासिनीम् ।
दन्तुरां दक्षिणव्यापिमुक्तालम्बिकचोच्चयाम् ।
शवरूपमहादेवहृदयोपरिसंस्थिताम् ॥
शिवाभिर्घोररुपाभिश्चतुर्दिक्षु समन्विताम् ॥
महाकालेन च समं विपरीतरतातुराम् ।
सुखप्रसन्नवदनां स्मेराननसरोरुहाम् ॥
एवं संचिन्तयेत्कालीं श्मशानालयवासिनीम् ॥

वस्तुतः कालीतत्त्वं रुपातीतं कालस्यैव नीरुपत्वात् । किन्तु ध्यानार्थं तस्याः रूपाभिकल्पनं भवति । ध्यानेषु च तस्या रुपातीतत्वं कृष्णवर्णेन सूचितं भवति । यथा महानिर्वाणे (१३/३७) स्पष्टीकृतम्—

श्वेतपीतादिको वर्णो यथाकृष्णे विलीयते ।
प्रविशन्ति तथा काल्यां सर्वभूतानि शैलजे ॥
अतस्तस्याः कालशक्तेर्निर्गुणायाः निराकृतेः ।
हितायाः प्राप्तयोगानां वर्णः कृष्णो निरुपितः ॥

केचन विद्वांसः काल्याः स्वरुपविमर्शनप्रसंगे रूपकं भावयन्ति[१] । तस्याः घोररुपे सर्वसंहर्तुः कालस्य लयं पश्यन्ति[२] । काल्याः घोररुपायाः स्वरूपप्रतीकानि सरजॉन वुड्रफमहोदयेन स्वकीये "दि नेकलेस आफ काली[३]" इति निबन्धे वैशद्येन न्यरूपि । एतदपि लोकरञ्जनपरं व्याख्यानं यथावसरं ग्राह्यमेव । किन्तु वस्तुतः रहस्यात्मिकायाः तात्त्विकं रूपविज्ञानं तु गूढतरं योगिभिर्लभ्यमेवास्ति ।

**काल्युत्पत्तिः—**

पुराणेषु कल्पभेदेन काल्युत्पत्तिविषयाण्याख्यानानि बहुविधानि सन्ति ।

---

१. विशेषः द्र.–Sakti Cult in Ancient India, १५३ तमे पृष्ठे The Tantra पुस्तस्योद्धरणम् ।

२. द्र० The Garland of letters- पृ० २३६ ।

३. द्र० तत्रैव ।

कालिका पुराणे (६।१५-५६) तस्याः योगमायारूपेणप्रादुर्भावः वर्णितः। सा च शिव मोहनार्थं संस्तुता। देवीमाहात्म्ये (१।७२-८७) सर्गादौ मधुकैटभमोहनाय आद्यायाः प्रादुर्भावः वर्णितः। हेमाद्रौ श्यामायाः प्रादुर्भावः सागरमथनकाले बभूवेत्यादित्य पुराणप्रमाणादुपवर्णितम्[1]। वायुपुराणे उक्तं यत् पार्वती स्वात्मानं कृष्णश्वेतोभय-रूपेण विभज्य गौरी कालीचेत्यभिधानयुग्मेन प्रसिद्धा। तत्र काली क्रोधावस्थायां प्रादुर्भूता भूतैरावृतासीत्[2]। स्कान्दे तारकवधोपक्रमे हिमवतः गृहे काली प्रादुर्बभूवेति वर्णितम्।

योगिनीतन्त्रे षोडशे पटले विवृतं यत् पुरा समुद्रे ब्रह्मविष्णू परस्परं विवदन्ता-वास्तां ईश्वरोहमीश्वरोऽहमिति। तयोः शान्त्यै जलार्णवे शिवलिङ्गः प्रादुर्बभूव। तन्मध्ये रुद्रः शिवः बभ्राम। तं दृष्ट्वा विष्णुः शान्तः संजातः। ब्रह्मा च विचिकित्सन् शिवलिङ्गे विघ्नं चकार। स विघ्न एव त्रिपुराख्यः राक्षसः बभूव। ब्रह्मणः शक्त्या शक्तः स दैत्यः इन्द्रादीन् धर्षयित्वाविचकार। ब्रह्मणोऽपि कमलासनं छिन्नं जातम्। पलायन पराः देवाः हिमालयं जग्मुः। तत्र ते तपस्तेपुः। प्रसन्नः शिवः पृथिवीं रथं विधाय, चन्द्रदिवाकरे चक्रे कृत्वा, ब्रह्माणं सारथिं विधाय, वेदान् प्रग्रहीकृत्य, वासुकिं ज्यां विभाव्य, विष्णुं बाणं कृत्वा, त्रिपुरं ददाह। अनन्तरं शिवेन पुनः पृथिवी व्यवस्थापिता। किन्तु धरा महाश्मशानरूपैवासीत्। पञ्चक्रोशाभ्यन्तर एव देशे देवानां जीवानां च तेजः संघीभूय रराज। शिवस्तदानीं त्रिपुरासुरस्य शवभूते देहे मर्मस्थले परमेश्वरीं प्रार्थयामास। सा पराकला चैतन्यरूपिणी महाकाली तत्र प्रादुर्बभूव। तस्यास्तेजः धराप्रमाणमासीत्। तस्या एव प्रकाशे पुनः सर्गव्यवस्था प्रारभत्[1]।

एतादृशेषु विवरणेषु भगवत्याः कालिकाया सिसृक्षारूपत्वमेव प्रकटितम् पौराणिकैः। यदा सा बहिर्मुखा तदा सिसृक्षा रुपान्तर्मुखा च सञ्जिहीर्षारूपा प्रतिपादिता।

**दक्षिणाकालीपदार्थः—**

दक्षिणाकालीति प्रसिद्धतमं नाम आद्याया अस्ति। कालीतन्त्रभाष्यकर्ता त्रिधा निर्वक्ति दक्षिणापदमाहात्म्यम्। यथा हि—

---

१. हेमाद्रि व्रत ख० पृ० ६१५।

१. रवेः सुतः शनिः दक्षिणस्यां दिशि निवसति । स च कालीतिनामोच्चारमात्रेण भीतः पलायते । इत्थं शनिदोषनाशिनी सा दक्षिणाकालीति विश्रुता ।

२. काली वामा सती दक्षिणं पुरुषं जयति । तस्माद् दक्षिणाकालीति प्रसिद्धा ।

३. निर्गुणस्य ब्रह्मणः सगुणरूपेण सृजनसंहरणदाक्षिण्यादपि सा दक्षिणाकालीति कथिता । इति दक्षिणा पदनिर्वचनेन काल्याः आद्यात्वं स्थितं महानिर्वाण तन्त्रवचनप्रमाणेन च पुष्टं भवति । यथा च—

सृष्टेरादौ त्वमेकासीत् तमोरुपमगोचरम् ।।

(महानि० ४।२५)

कालीभेदविवरणम्—

आद्या विद्यासाम्राज्ञी सर्वक्रमाधिष्ठातृत्वेनापि वर्णिता । यथोक्तम्—

सा काली द्विविधाप्रोक्ता श्यामारक्ता प्रभेदतः ।
श्यामा तु दक्षिणा प्रोक्ता रक्ता श्रीसुन्दरीमता ।।

(द्र० कल्याण-उपासनाङ्क पृ० ४१०)

तथापि कादिक्रमे उपासना विधिभेदेन फलभेदेन च नवभेदाः प्रकल्पिताः[२]—

| | | |
|---|---|---|
| १. दक्षिणाकाली | २. भद्राकाली | ३. श्मशानकाली |
| ४. कालकाली | ५. गुह्यकाली | ६. कामकलाकाली |
| ७. धनाकाली | ८. सिद्धिकाली | ९. चण्डकालीति । |

जयद्रथ यामले—

| | | |
|---|---|---|
| १. डम्बरकाली | २. गहनेश्वरीकाली | ३. एकताराकाली |
| ४. चण्डशाबरीकाली | ५. वज्रवतीकाली | ६. रक्षाकाली |
| ७. इन्दीवरीकाली | ८. धनदाकाली | ९. रमण्याकाली |
| १०. ईशानकाली | ११. मन्त्रमाताकालीति | |

---

१. योगिनीतन्त्रम् १६।१-३० ।

२. द्र०-शक्तिसंगमतन्त्रम् भा० ४ पृ० ६२ ।

एकादशकालीभेदाः उक्ताः । एवमेव सम्मोहनतन्त्रे—

१. स्पर्शमणिकाली    २. चिन्तामणिकाली    ३. सिद्धकाली

४. विद्याराज्ञीकाली    ५. कामकलाकाली    ६. हंसकाली

७. गुह्यकालीति भेदाः प्रकल्पिताः । तन्त्रराजतन्त्राख्ये लुप्ते ग्रन्थे त्रयोदशकाली भेदाः कथिताः[1] तद्यथा—

सृष्टिकालीं च संहारे सृष्टौ सा परमेश्वरी ।
स्थितिकाली तथा घोरा ततः संहारकालिका ॥
रक्तकाली चर्वयन्ती रक्तौघमविभेदतः ।
सुकाली यमकाली च मृत्युकाली भयावहा ॥
भद्रकाली तथा चान्या परमादित्यकालिका ॥
मार्तण्डकाली कालाग्नी रुद्रकाली महोल्बणा ।
महाकालकुलेकाली महाभैरवकालिका ।
त्रयोदशविधा काली विज्ञेया नाम भेदतः ॥

श्रीक्रमस्तोत्रे पञ्चशतिकायां च सृष्ट्यादि कालीभेदानां स्वरूपवर्णनं वैशद्येनोपलभ्यते ।

मन्त्रोदया व्योमरुपा व्योमस्था व्योमवर्जिता ॥
सर्वा सर्वविनिर्मुक्ता विश्वस्मिन् सृष्टिनाशिनी ॥
या काली विश्वविभवा सृष्ट्यर्थकारणक्षमा ॥
वदन्तः शान्तिमायाति सृष्टिकालीति सा स्मृता ॥

अपि च श्रीक्रमे—

कौलार्णवानन्दघनोर्मिरुपामुन्मेषमेषोभयमाभजन्तः ।
निलीयते नीलकुलालये वा तां सृष्टिकालीं सततं नमामि ॥

२. रक्तकाली—

न चैषा चक्षुषा ग्राह्या न च सर्वेन्द्रियस्थिता ।
निर्गुणा निरहङ्कारा रञ्जयेद्विश्वमण्डलम् ॥
सा कला तु यदुत्पन्ना सा ज्ञेया रक्तकालिका ॥

---

१. लुप्तागमसंग्रहः, म० म० गोपीनाथ कविराज, वाराणसी, पृ० १५ ।

श्रीक्रमे—

महाविनोदार्पितमातृचक्रवीरेन्द्रकासृग्रसपानरक्ताम् ।।

रक्तीकृतां च प्रलयात्यये तां नमामि विश्वाकृतिरक्तकालीम् ।।

३. संहारकाली श्रीक्रमस्तोत्रे—

वाजिद्वयस्वीकृतवातचक्रप्रक्रान्तसंघट्टनमागमस्थाम् ।

शुचिर्ययास्तंगमितोऽर्चिषा तां शान्तां नमामि स्थितिनाशकालीम् ।।

पञ्चशतिकायाम्—

हासिनी पौद्गली चेयं बालाग्रशतकल्पना ।।

कल्पते सर्वदेहस्था स्थितिसर्गस्य कारिणी ।।

यदुत्पन्ना तु सा देवी पुनस्तत्रैव लीयते ।।

तां विद्धि देवदेवेश स्थितिकालीं महेश्वर ।।

४. यमकाली—तत्रैव

यमरूपस्वरुपस्था रुपातीतास्वरुपगा ।।

सा काली लीयते यस्यां यमकाली तु सा स्मृता ।।

श्रीक्रमस्तोत्रे—

सर्वार्थ सङ्कर्षण संयमस्य यमस्य यन्तुर्जगतो यमाय ।

वपुर्महाग्रासविलासरागात् सङ्कर्षयन्तीं प्रणमामि कालीम् ।।

५. चण्डकाली पञ्चशतिकायाम्—

चण्डकाली शुद्धवर्णा यामृतग्रसनोद्यता ।।

भावाभावविनिर्मुक्ता विश्वसंहाररुपिणी ।।

यत्र सा याति विलयं सा च संहारकालिका ।।

श्रीक्रमस्तोत्रेऽपि—

उन्मन्यनन्ता निखिलार्थगर्भा या भावसंहारनिमेषमेति ।

सदोदिता सत्युदयाय शून्यां संहारकालीं मुदितां नमामि ।।

६. मृत्युकाली-श्रीपञ्चशतिकायाम्—

ओमित्येष कुलेशानी मृत्युकालान्तपातिनी ।

मृत्युकालकला यस्याः प्रविशेद्विग्रहं शिवः ।।

सदा सा मृत्युकालीति ज्ञेया गिरिसुताधव ।।

श्रीक्रमस्तोत्रे यथा—

ममेत्यहंकारकलाकलापविस्फारहर्षोद्गतगर्वमृत्युः ।
ग्रस्तौ यया घस्मरसंविदं तां नमाम्यकालोदितमृत्युकालीम् ॥

७. रुद्रकाली- श्रीपञ्चशतिकायाम्—

निगमागमसुगम्यस्था महाबोधावलोकिनी ।
मायामलविनिर्मुक्ता विज्ञानामृतनन्दिनी ॥
सर्वलोकस्य कल्याणि रुद्रा रुद्रसुखप्रदा ॥
यत्रैव शाम्यति कला रुद्रकालीति सा स्मृता ॥
भेदस्य द्रावणाद्भद्रा भद्रसिद्धिकरीति या ॥

श्रीक्रमस्तोत्रेऽपि—

विश्वं महाकल्पविरामकल्पभवान्तभीमभ्रुकुटिभ्रमन्त्या ॥
याश्नात्यनन्तप्रभवर्चिषा तां नमामि भद्रां शुभभद्रकालीम् ॥

क्रमसद्भावभट्टारकेऽपि—

इदं सर्वमसर्वं यत्संहारान्तं तु नित्यशः ।
कुटिलेक्षणरेखान्तग्रस्तमस्तमितं च यत् ॥
ततो बोधरसाविष्टा स्पन्दमाना निराकुला ॥
दीधितीनां सहस्रं यद्वमेच्च पिवते भृशम् ॥
सा कला लीयते यस्यां रुद्रकालीति सा स्मृता ॥

मार्तण्डकाली- श्रीक्रमस्तोत्रे—

मार्तण्डमापीतपतङ्गचक्रं पतङ्गवत्कालकलेन्धनायाः ॥
करोति या विश्वरसान्तकां तां मार्तण्डकालीं सततं प्रणौमि ॥

श्रीपञ्चशतिकायाम्—

शब्दब्रह्मपदातीता षट्त्रिंशान्तनवान्तगा ।
ब्रह्माण्डखण्डादुत्तीर्णा मार्तण्डी मूर्तिरव्यया ॥
सा कला लीयते यस्यां मार्तण्डी कालिकोच्यते ॥

८. परमार्ककाली-श्री क्रमस्तोत्रे—

अस्तोदितद्वादशभानुभाजि यस्यां गता भर्गशिखा शिखेव ।
प्रशान्त धाम्नि द्युति नाशमेति तां नौम्यनन्तां परमार्ककालीम् ॥

श्रीपञ्चशतिकायाम्—

एकाकिनी चैकवीरा सूसूक्ष्मासूक्ष्मवर्जिता ।
परमात्मपदावस्था परा परस्वरुपिणी ।
सा कला पररुपेण यत्र संलीयते शिवः ।।
स कला परमार्केति ज्ञेया भस्माङ्गभूषणा ।।

१०. कालाग्निकाली तत्रैव—

वरदा विश्वरूपा च गुणातीता परा कला ।।
अघोषा सा स्वरारावा कालाग्निग्रसनोद्यता ।।
निरामया निराकारा यस्यां सा शाम्यति स्फुटम् ।
कालाग्निरुद्रकालीति सा ज्ञेयामरवन्दिता ।

श्रीक्रमस्तोत्रे च—

कालक्रमाक्रान्तनिवेशचक्रक्रोडीकृतान्ताग्निकलापउग्रः ।
कालाग्निरुद्रो लयमेति यस्यां तां नौमि कालानलरुद्रकालीम् ।।

११. कालकाली- श्रीक्रमस्तोत्रे—

नक्तं महाभूतलये श्मशाने दिक्खेचरी चक्रगणेन साकम् ।
कालीं महाकालमलं ग्रसन्ती वन्दे ह्यचिन्त्यामनिलानलाभाम् ।।

श्रीपञ्चशतिकायाम्—

ऋतोज्वला महादीप्ता सूर्यकोटिसमप्रभा ।
कलाकलङ्करहिता कालस्य कलनोद्यता ।।
यत्र सा लयमाप्नोति कालकालीति सा स्मृता ।।

१२. घोरकाली- श्रीपञ्चशतिकायाम्—

दशसप्त विसर्गस्था महाभैरवभीषणा ।।
संहरेद् भैरवान् सर्वान् विश्वं च सुरपूजिता ।।
सान्तः शाम्यति यस्यां च सा स्याद् भरितभैरवी ।।
महाभैरव चण्डोग्रघोरकाली परा च सा ।।

श्रीक्रमस्तोत्रे—

क्रमत्रयत्वाष्ट्रमरीचिचक्रे संसारचातुर्यतुरीयसत्त्वाम् ।
वन्दे महाभैरवघोरचण्डकालीं कलाकाशशशाङ्ककान्तिम् ।।

इत्थं तन्त्रेषु बहुविधप्रपञ्चितताया भगवत्या आद्यायाः क्रमभेदेन कल्पभेदेन संप्रदाय भेदेनोपासक भेदेन च नामान्तराणि स्वरुपान्तराण्युपलभ्यन्ते । साधकैश्च स्वकुलवर्त्मानुरुपमेवोपासनं कर्तव्यमिति सामान्यः निर्देशः प्राचाम् ।

## पूजा —

ग्रन्थोऽयं कालीपूजाप्रतिपादकः तस्मात्पूजासम्प्रत्यायकं व्याख्यानमप्यत्र स्यादिति प्रकृतप्रकरणस्य प्रवृत्तिनिमित्तम् ।

पूजायास्साक्षात्सम्बन्धः धर्मेण धर्मस्य यागेन यागस्य च देवानामस्तित्वश्रद्धया इत्यपरोक्षः सिद्धान्तः । तथापि मूलतस्त्वयं शब्दः "सम्मानभावं तदुत्तेजिकां क्रियां" चाभिव्यनक्ति । किन्तु काले चरमसम्मानार्हाणां सर्वेभ्य सर्वप्रदातृणां देवानां सपर्यावाचकः जातः । वस्तुतः देवपूजनं धर्माचारस्य क्रियात्मकः पक्षः, न चास्य पर्यवसानं क्रियाविशेष एव भवति । अत्र हि स्वेष्टस्य विभुस्वरूपदर्शनं, स्वकर्मसाक्षित्वेनानुक्षणं तस्य सत्तानुभवः स्वेष्टपिपूजयिषारूपाभावना चापि समाहृतावर्तते । सर्वे समामनन्त्यैतिह्यविदः पौरस्त्याः पाश्चात्याश्च यद् यत्र कुत्र स्थले या कापि मानवजातिः विश्वस्मिन् विकसिता सा यथाकथञ्चिद्रूपेण देवसत्तां प्रकृतिनियन्तृरूपेणाभिकल्प्य सभ्यतायाः प्रथमचरणादारभ्य अद्य यावत् पूजयत्यस्तीति ।

विशेषतस्तु भारते वर्षे ऋग्वेदाख्यस्यादिग्रन्थस्य जनिभूमौ चेतनैकदर्शनाः साक्षात्कृतधर्माणो ऋषयः प्रथमे पूजकाः आसन् । तैः प्रवर्तिता पूजा परम्परा विकसिता सती भारतीयसंस्कृतेः प्राणभूता सञ्जाता ।

आद्याः ऋषयः सपर्यायाः द्विविधं रुपं प्रचारयामासुर्देवानामाकारद्वैविध्यात् । यथाह यास्कः—

"अथाकारचिन्तनं देवानां पुरुषविधास्स्युरित्येकं चेतनावद्धि स्तुतयो भवन्ति तथाभिधानानि इति ।" (नि० ७/६)

एवं हि लोके देवाना द्विविधं रुपं स्वीकृतमासीत्पुरुषवदाकारधरः देवः चेतनरूपश्चेति । मन्त्राभिकल्पकाः अग्नौ तान्नुद्दिश्याहुतिप्रदातारः बभूवुः । चेतनमात्ररूपेण पूजकानां दर्शनं पूर्वमीमांसायां उपनिषदि, वेदान्ते, योगे च सुरक्षितम् । तेषां चेतनमात्ररूपाणां देवानामाकाराभिकल्पनपुरस्सरा पूजापरम्परा पुराणेषु तन्त्रेषु च प्रतिपादिता जाता । इयं द्विविधा पूजा बाह्याभ्यन्तर भेदेनापि कथिता । आकारः देवानां बाह्यं रुपमान्तरञ्च चेतनात्मकमेव । अथ वेदमार्गेऽपि पूजायां हविरादिबाह्यपदार्थप्रयोगात् यागादीनामपि बाह्यपूजायामेवपरिगणनं जातंआन्तरे तु मानसयागानां योगोक्तसमाधिध्यानादीनां परिगणनं कार्यम् । उक्तं हि देवीभागवते (७/३९/३-४)

द्विविधा मम पूजास्याद्बाह्या चाभ्यन्तरापि च ।
बाह्यापि द्विविधा प्रोक्ता वैदिकी तान्त्रिकी तथा ॥

एष एव प्राचीनः सिद्धान्तः तन्त्रेष्वपि गदितः । यथा महानिर्वाणतन्त्रे—

उत्तमो ब्रह्मसद्भावो ध्यानभावस्तु मध्यमः ।
स्तुतिर्जपोऽधमो भावो बहिः पूजाधमाधमा ॥इति॥

अन्यत्र च पूजायास्त्रिविधत्वमुक्तम् । यथा परशुरामकल्पसूत्रभाष्ये (पृ० ४३०)

१. उत्तमं पूजनम्—

अग्निकार्येण हविषा भूषणैश्च समन्वितम् ।
द्रव्यशुद्धिसमायुक्तमुत्तमं पूजनं स्मृतम् ॥

२. मध्यमम्—

अग्निकार्यविहीनं तु देशकालानुसारतः ।
उपचारैर्युतं द्रव्यैर्मध्यमं पूजनं स्मृतम् ॥

३. कनिष्ठं पूजनम्—

द्रव्यालङ्कारवस्तूनि वर्जयित्वा पृथग्विधम् ।
केवलं पुष्पयोगेन कनिष्ठं पूजनं स्मृतम् ॥

किञ्चाधिकारिभेदेन पञ्चधा पूजा प्रवर्तिता । यथा मेरौ

१. आतुरी—

यदि लङ्घनपर्यन्तो व्याधिरात्मनि दृश्यते ।
तदा पूजा न कर्तव्या स्थाण्डिले प्रतिमासु च ॥

न स्नानं दन्तकाष्ठं वा कुर्याद्धोममथापि वा ।
रविमण्डलमालोक्य प्रतिमामथवा पुनः ।
मूलमन्त्रं सकृज्जप्त्वा पुष्पं साक्षात् समुत्क्षिपेत् ।।
श्रान्तो व्याधिभिरत्युग्रैः क्लान्तश्चैवोपवासके ।
स्तुत्वा देवमथाग्नींश्च गुरुन् विप्रान् प्रपूजयेत् ।।
एतावत् काल विच्छिन्ना पूजा युष्मत्प्रसादतः ।
न दोषो मेऽस्त्विति प्रार्थ्य पुनः पूर्ववदाचरेत् ।।

२. सौतिकी—

अथ सूतकिनः पूजा वदाम्यागमचोदिताम् ।
स्नात्वा नित्यं च निर्वर्त्य मनसा क्रियया तु वै ।।
बाह्यपूजा क्रमेणैव ध्यानयोगेन पूजयेत् ।।

३. त्रासी—

त्रासिनो वक्ष्यते पूजा यथैवागमचोदिताम् ।
लब्धं वा यदि वालब्धमर्घ्यपात्रादिसाधनम् ।।
पूजोदकेन कर्तव्या न चेत्तोयं च विद्यते ।
यदि सम्पूजयेद् देवं भावना कुसुमादिभिः ।।

४. दौर्बोधिकी—

मूर्खस्त्रीबालवृद्धाद्याः दुर्बोधा इति भाविताः ।।

इति मेरुतन्त्रवचनम् । तेषां पूजाविधिर्यथागमरहस्ये—

यथा ज्ञानं सुरार्चा सा दौर्बोधिकी कीर्तिता बुधैः ।।

(आर० र० २, पृ० १२९)

५. संक्षिप्ता—द्रव्यहीनां संक्षिप्तां पूजां कुर्यात् । यथा—

सर्वोपचारवस्तूनामलाभे भावनेन हि ।
निर्मलेनोदकेनाथ पूर्णतेत्याह नारदः ।

अधिकारिभेदेन पूजाभेदः पूजासामान्यादतिरिच्यते, परिस्थितिविशेषे विहित-

त्वात् । पूजासामान्यन्तु उत्तमाद्यमेव स्वीकार्यम् । वेदवत् तन्त्राणामपि प्रामाण्यग्रहणात् त्रिविधापूजा उभयत्र सामान्यैव ।

अथ सामान्येन पूजा पञ्चाङ्गेषु विभज्य व्यवस्थापिता । अङ्गानि हि १. कवचं २. पद्धतिः ३. पटलं ४. स्तोत्रं ५. सहस्रनाम चेति । तत्र पद्धतौ पटले च पूजाविधानं प्रपञ्चितम् । प्रकरणमिदं देवीभागवते (३/२५) द्रष्टव्यम् । देवपूजा सर्वविधकल्याणाय कल्पिता तस्मादुक्तमागमरहस्ये (भाग १ पृ० ४०) ।

वृथा कालं न गमयेद् द्यूतक्रीडादिना सुधीः ।
गमयेद् देवतापूजाजपयज्ञस्तवादिना ।। इति ।।

परापूजा तु इष्टदेवे सर्वतोभावेन लयरूपा एव । यथा विज्ञानभैरवे (श्लो० १४७)

पूजानाम न पुष्पाद्यैर्या मतिः क्रियते दृढा ।
निर्विकल्पे महाव्योम्नि सा पूजा ह्यादराल्लयः ।।

**कालीपूजापद्धतिः**

ग्रन्थोऽयमाद्यायाः कादिक्रमेश्वर्याः कालकलनदक्षायाः दक्षिणकालिकाया उत्तमपूजाविधिप्रवर्तनपरः क्रमदीक्षितानामतिशयेनोपकारकः सर्वाङ्गोपेतत्वाद्विशदत्वाच्चास्ति । ग्रन्थस्याद्वितीयामातृका कालीनित्यपूजाविशेषपद्धतिरितिनाम्ना प्रयागस्थगङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठे सुरक्षिता वर्तते । मातृकेयं २७.८ × १७.६ (से०मी०) इत्याकारा १२९ पर्णात्मिकाः प्रतिपृष्ठे पंक्तिदशकं प्रतिपंक्तौ चाक्षरषोडशकं वहन्ती राजते । देवनागराक्षरैः सुस्पष्टविलिखितायाः अन्त्यं पर्णचतुष्टयं दक्षिणकोणतः कीटभक्षितम् । लिपिकारोऽस्य प्रयागराजः १८८० खीष्टाब्दे इमां लिलेख । तेन ग्रन्थान्ते लिखितं यद् बटुकनाथस्य प्रसादाल्लब्धोऽयं ग्रन्थ इति । वाक्येनानेनानुमीयते यद्बटुकनाथ एवास्य कर्तेति । कः कुतस्तनीयोऽयं बटुकनाथ इत्यनिर्वर्णितं लिपिकर्त्रा । किन्तु मातृकालेखन काल एवविन्ध्याचलस्थ भैरवकुण्डेति स्थले कादिक्रमोपासकनां केन्द्रे बटुकनाथाभिधानः महन्थ आसीदागमशास्त्रमर्मज्ञः । तस्य प्रसादात् प्रयागराजेन लब्धोऽयं ग्रन्थ इति सम्भाव्यते ।

**पाठसंस्क्रिया**

वस्तुतः पाठान्तरहेतूनामियं भवति स्थितिः—




लिपिकः प्रयागराजः श्रुत्वा लिलेखेति मातृकासम्पादनेऽनुभूतम् । तस्मात् प्रकृत मातृकायां प्रायेणाज्ञानलेखनश्रवणजन्यास्त्रुटयः दृश्यन्ते । यथा–देव्यै–देव्यं, साक्षान्महेश्वरः–साक्षात्महेश्वरः, जगत्–जक्तं, ज्ञानायै—ग्यानायै, दयितया–दैतया इत्यादिषु नैकेषु स्थलेषु द्रष्टव्यम् । मातृकासंपादनक्रमे लेखनजन्यदोषाणां परिमार्जनं व्याकरणदृष्ट्या विषयदृष्ट्या च ग्रन्थान्तरसाहाय्येन विहितम् । विशेषेण विषयगतदोषमार्जने श्यामारहस्यादीनां प्रमाणग्रन्थानां उपयोगः विहितः ।

**ग्रन्थगतविषयाः**

कालीपूजापद्धतौ विषयदृष्ट्या पञ्चवर्गाः दृश्यन्ते । यथा—

१. प्रातः कृत्यम् ।
२. पूजनोपक्रमः ।
३. पूजनम् ।
४. पात्रवन्दना ।
५. मकाराणामनुकल्पविधानम् ।

तत्र प्रातः कृत्यं द्विधा विभक्तम् । शैय्यात्यागात् पूर्वं कृत्यं शैय्यात्यागानन्तरं कृत्यञ्चेति ।

**शैय्यात्यागात्पूर्वकृत्यम्—**

| | |
|---|---|
| १. कुलवृक्षस्मरणम् । | २. गुरोर्मानसपूजा । |
| ३. गुरुपादुकामन्त्रजपः । | ४. गुरुवन्दना । |

५. कुलकुण्डलिनीध्यानम् । ६. कुलकुण्डलिनीतर्पणम् ।
७. गुरोर्ध्यानम् । ८. कुलगुरुपादुकास्मरणम् ।
९. कुण्डलिनीप्रत्यावर्तनम् । १०. चौरगणेशन्यासः ।
११. स्वकल्पोक्तमन्त्रन्यासः । १२. दक्षिणकालिकामन्त्रविधिः ।
१३. कालीध्यानम् न्यासश्च । १४. मानसपीठन्यासः ।
१५. मानसपूजनम् । १६. अजपासमर्पणम् ।
१७. अजपागायत्रीविधिः । १८ गुरुदेवतात्मनामैक्यभावनम् ।
१९. देवीप्रार्थना ।

इति कृत्यानि करणीयानि । शैय्यां त्यक्त्वा च—

१. भूस्पर्शः । २. शौचविधिः ।
३. दन्तमार्जनविधिः । ४. स्नानविधिः ।
(क) संकल्पः । (ख) तान्त्रिकस्नानम् ।
(ग) जलस्नानम् । (घ) सूर्यार्घ्यदानम् ।
(ङ) मान्त्रादिस्नानविधिकथनम् ।
५. वस्त्रधारणम् । ६. तिलकधारणम् ।
७. सन्ध्यावन्दना—(क) वैदिकी संन्ध्या । (ख) तान्त्रिकी संध्या ।
८. तर्पण विधिः । ९. वैकल्पिकसंध्याविधिः ।

इति सम्पाद्य प्रातः कृत्यं सम्पद्यते ।

पूजनोपक्रमः—

१. यागस्थानप्रवेशः—

(क) द्वारशोधनम् (ख) पीठध्यानम्
(ग) शिखाबन्धनम् (घ) सामान्यार्घ्यस्थापनम्
(ङ) सामान्यार्घ्येणयागमन्दिरद्वारप्रोक्षणम् (च) द्वारपूजा
(छ) द्वारदेवतापूजा (ज) यागमन्दिर प्रवेशनम्
(झ) विघ्नोत्सारणभूस्पर्शाभिमन्त्रणानि ।

२. आसनविधिः —

(क) आसनशोधनम् (ख) आस्तरणम्
(ग) पूजनम् (घ) उपवेशनम् ।

३. स्वदेहशुद्धिः—

४. विजयाग्रहणम्—

(क) शोधनम् (ख) शोषणम्

(ग) दहनम् (घ) अमृतीकरणम्

(ङ) सकलीकरणम् (च) सन्दीपनम्

(छ) अभिमन्त्रणम् (ज) सविधिग्रहणम्

(झ) मूलमन्त्रजपः (ञ) देव्यात्मनोरैक्यभावनम् ।

५. हेतुशुद्धिः—

(क) आधारपूजा (ख) मुद्राविधिः

(ग) पञ्चीकरणम् (घ) कुम्भपूजा

(ङ) पाशुपतमन्त्रविधिः (च) दीपनीविद्या

(छ) आनन्दगायत्री (ज) ब्रह्मार्चाप्रयोगः

(झ) शापविमोचनम् (ञ) अभिमन्त्रणम्

(ट) तीर्थावाहनम् (ठ) छुरिकाविधिः

(ड) अमृतीकरणम् (ढ) तिरस्करिणीविद्या

(ण) पावनादिकम् (त) घटे सूर्यमण्डलावाहनम्

(थ) वारुणमन्त्रविधिः (द) अमृतमन्त्रविधिः

(ध) सुधाध्यानम् (न) आनन्दभैरवी पूजा ।

६. शुद्धिसंस्कारः—शोषणदहनामृतीकरणावगुण्ठनाभ्युक्षणाभिमन्त्रणसकलीकरणसन्दीपनदिग्बन्धनाच्छादनाभिमन्त्रणानि ।

७. मीनशोधनम् ।

८. मुद्राशोधनम् ।

९. कुण्डगोलादिद्रव्यसंस्कारः ।

१०. शक्तिशोधनम्—

(क) वामे पूजा (ख) न्यासः

(ग) अभिषेकः (घ) मन्त्रदानम्

११. विशेषार्घ्यस्थापनम्——

(क) आधारस्थापनम् । (ख) वह्न्यादिकलापूजा ।
(ग) द्रव्यनिक्षेपः । (घ) चन्द्रकलापूजा ।
(ङ) यन्त्रविधिः । (च) तीर्थावाहनम् ।
(छ) शुद्ध्यादिनिक्षेपणम् । (ज) आनन्दभैरवभैरवीपूजा ।
(झ) अभिमन्त्रणम् । (ञ) पुनरानन्दभैरवभैरवीपूजा ।
(ट) इष्टदेवतावाहनम् । (ठ) दिग्बन्धनावगुण्ठनामृतीकरणमुद्राप्रदर्शनसकलीकरणाच्छादनभिमन्त्रणयूपादिप्रदर्शनानि ।
(ड) पुष्पाञ्जलिः ।

१२. कल्पविधिः । १३. गुरुभैरवादितर्पणम् ।
१४. तत्त्वशुद्धिः । १५. बिन्दुस्वीकरणम् ।
१६. पूजोपकरणानां प्रोक्षणम् ।

३. पूजा—

१. बटुकादिबलिदानम् । २. कामकलारूपध्यानम् ।
३. कुलमातृकाध्यानम् । ४. खड्गादिमुद्राविधिः ।
५. पात्रामृतेसमर्पणम् । ६. नैवेद्यार्पणम् ।
७. भैरवपूजा । ८. परिवारदेवतापूजा ।
(क) गुरुपङ्क्तिपूजा । (ख) आवरणार्चनम् ।
(ग) काल्यादिशक्तिपूजा । (घ) ब्राह्म्यादिशक्तिपूजा ।
(ङ) भैरवध्यानम् पूजा च । (च) लोकपालपूजा ।
(छ) वज्रादिपूजा । (ज) देव्यस्त्रपूजा ।

९. प्रधानदेवतापूजा ।

(क) घटद्रव्यशुद्धिनिवेदनम् । (ख) महाकालसहितदक्षिणकालिकापूजा ।
(ग) कुलारात्रिकम् । (घ) बलिदानम् ।

१३. जपविधिः——

(क) प्राणायामः । (ख) न्यासः ।
(ग) गुरुप्रणामः । (घ) मन्त्रशिखा ।

(ङ) वीजामतृकाजपः । (च) मन्त्रोपदेशविधिः ।

(छ) गुरोर्ध्यानम् । (ज) कुल्लुकाजपः ।

(झ) सेतुः । (ञ) महासेतुः

(ट) प्रणवविधिः । (ठ) मातृकामन्त्रविधिः ।

(ड) प्राणायामन्यासे । (ढ) मुखशोधनम् ।

(ण) प्राणयोजनम् । (त) दीपनीविद्या ।

(थ) अशौचभङ्गविधिः । (द) सेतुः ।

(ध) रहस्यमालापूजा । (न) मूलमन्त्रजपः ।

(प) जपसर्पणम् । (फ) जपान्ते मालावन्दना ।

(ब) जपार्पणम् । (भ) सेतुः ।

(म) अशौचभङ्गम् । (य) प्राणायामः ।

(र) मालास्थापनम् । (ल) अशक्तेभ्योऽनुकल्पविधिः ।

११. पूजाङ्गहवनविधिः—

(क) स्थण्डिलनिर्माणम् । (ख) स्थण्डिलसंस्कारः ।

(ग) अग्निस्थापनम् । (घ) देवीध्यानं पूजनञ्च ।

(ङ) व्याहृतिहवनम् । (च) मूलमन्त्रहवनम् ।

(छ) पुनःव्याहृतिहोमः । (ज) देवताध्यानम् ।

(झ) वह्निविसर्जनम् ।

१२. स्तोत्रसहस्रनामपाठः ।

१३. बिसर्जनम्—

(क) प्रदक्षिणा । (ख) पूजनसमर्पणम् ।

(ग) आवरणदेवतानां देव्यङ्गेविलपनम् । (घ) निर्माल्यविसर्जनम् ।

(ङ) अनुलेपादिनिर्माल्यग्रहणम् ।

४. पात्रवन्दना—

(१) सामयिकेभ्यः शुद्धचादिदानम् । (२) त्रिखण्डयासवग्रहणम् ।

(३) शान्तिस्तवपाठः । (४) आनन्दकवचपाठः ।

(५) कुलस्तोत्रपाठनिर्देशः । (६) पात्राणां श्रीचक्रे विसर्जनम् ।

(७) निर्माल्यवासिन्याः पूजा । (८) श्रीपात्रामृतविसर्जनम् ।

५. अनुकल्पविधिः—

(१) पञ्चमकाराणामनुकल्पाः । (२) सम्प्रदायविकल्पः ।

(३) मकारसहितपूजाधिकारनिर्णयः । इति विषयाः ग्रन्थे यथाक्रमं उपस्थापिताः साधकानामुपकारार्थम् ।

स्पष्टं यद् ग्रन्थोऽयं साधकान् मोदयिष्यतीति ।

**कृतज्ञाने—**

अस्मद् गुरुचरणानां विद्यापीठस्य प्राचार्याणां महामहिमशालिनां डॉ० गयाचरण त्रिपाठिवर्याणां सत्प्रेरणया आज्ञया च स्वानुकूलविषयो ग्रन्थोऽवाप्तः सम्पादितश्च । इदानीं तेषामेव कृपाबलात्प्राकाश्यं नीतः । अकिञ्चित्करोऽहं तेषां चरणयोः प्रणतीन्निवेदयन्मुदे । विद्यापीठे मातृकागारपालं डॉ० ब्रह्मदत्तं प्रति उपपालं (संम्प्रतिमातृकापालं) श्रीमज्जीवेश्वरझामहोदयं प्रत्याभरामि तयोः मातृकाप्रदानादिसत्साहाय्यमनुस्मरन् । ग्रन्थस्य प्रूफ़ादिशोधनावसरे वेदविभागाध्यक्षा डॉ० मायामालवीयात्यर्थेनोपकृतवती प्रणामाञ्जलिभिस्ताः प्रत्याभरामि ।

अस्माकंराष्ट्रीय-संस्कृत-संस्थानस्य सर्वेऽधिकारिणः धन्यवादार्हाः ग्रन्थस्यास्य प्रकाशनस्वीकृतिधनादिप्रदातारस्त एवेति ।

शाकुन्तलमुद्रणालयस्वामी श्रीमदुपेन्द्रत्रिपाठिः विविधाक्षरैः सुन्दररुपेण ग्रन्थंमुद्रयित्वा धन्यो जातः । साधुवदामि तं प्रति ।

ग्रन्थगतन्यूनातिरिक्तादीनां परिपूरणे मर्षणे च सर्वे दीक्षिताः विद्वान्सः साधका एव प्रमाणभूताः अधिकारिण इति विरमति—

**प्रकाशपाण्डेयः**

वैक्रमाब्दे २०५१ माघे

कृष्णचतुर्थ्यां गणेशजन्ममहापर्वणि

# ॥ अथ कालीपूजापद्धतिः ॥

श्रीगणेशाय नमः । श्रीगुरुभ्यो नमः ।

## प्रातःकृत्यप्रकरणम्

## पूर्वार्धम्

तत्रादौ प्रातःकृत्यं कुर्याद्यथा--

॥ कुलवृक्षस्मरणम् ॥

तत्र श्रीमान् साधकेन्द्रो ब्राह्मे मुहूर्ते शयनतलादुत्थाय, मुक्तस्वापः, श्लेष्मान्तककरञ्जनिम्बाश्वत्थहरीतकीविल्ववटोदुम्बरचिञ्चाख्यान् नव कुलवृक्षान् प्रणम्य,

॥ निजगुरुस्मरणम् ॥

स्वशिरसि सहस्रदलपङ्कजकर्णिकान्तर्गतचन्द्रमण्डलोपरिहंसगतं, शुद्धस्फटिकसङ्काशं, शुद्धक्षौमविराजितं, वराभयकरं, शान्तं, प्रसन्नवदनेक्षणं, गन्धपुष्पादिभूषाढ्यं, दयितासक्तमानसं, निजगुरुं ध्यात्वा,

लं पृथिव्यात्मकं गन्धं श्रीमदमुकानन्दनाथाय सशक्तिकाय समर्पयामि नमः ।

हं आकाशात्मकानि पुष्पाणि श्रीमदमुकानन्दनाथाय सशक्तिकाय समर्पयामि वौषट् ।

यं वाय्वात्मकं धूपं श्रीमदमुकानन्दनाथाय सशक्तिकाय समर्पयामि नमः ।

रं वह्न्यात्मकं दीपं श्रीमदमुकानन्दनाथाय सशक्तिकाय समर्पयामि नमः ।

वं अमृतात्मकं नैवेद्यं श्रीमदमुकानन्दनाथाय सशक्तिकाय समर्पयामि नमः ।

सं सर्वात्मकानि फलमूलताम्बूलादीनि श्रीमदमुकानन्दनाथाय समर्पयामि नमः ।

इति मानसोपचारैस्सम्पूज्य ऐं इति गुरुमन्त्रमथवा—

॥ गुरुमन्त्रविधानम् ॥

*ॐ ऐं ह्रीं श्रीं हस्ख्फ्रें हसक्षमलवरयूं हस्ख्फ्रें हसक्षमलवरयीं हसौः स्हौः अमुकानन्दनाथायामुकीदेव्यै वा श्रीपादुकां पूजयामि नमः ॥*

इति पादुकामन्त्रं कुण्डलीसूत्रग्रथितमातृकामालया, करमालया वा यथाशक्ति संजप्य, तेजोरूपं जपफलं *गुह्येति* मन्त्रेण गुरुदक्षकरे समर्प्य, प्रणम्य, स्तवं पठेत् ।

॥ गुरुस्तवनम् ॥

स्तवो यथा—

नमामि सद्गुरुं शान्तं, प्रत्यक्षं शिवरूपिणम् ॥
शिरसा योगपीठस्थं, मुक्तिकामार्थसिद्धये ॥१॥

श्रीगुरुं परमानन्दं, वदाम्यानन्दविग्रहम् ॥
यस्य सान्निध्यमात्रेण, चिदानन्दायते परम् ॥२॥

अखण्डमण्डलाकारं, व्याप्तं येन चराचरम् ॥
तत्पदं दर्शितं येन, तस्मै श्रीगुरवे नमः ॥३॥

अज्ञानतिमिरान्धस्य, ज्ञानाञ्जनशलाकया ॥
चक्षुरुन्मीलितं येन, तस्मै श्रीगुरवे नमः ॥४॥

गुरुर्ब्रह्मा गुरुर्विष्णुः, गुरुः साक्षान्महेश्वरः ॥
गुरुरेव जगत्सर्वं, तस्मै श्रीगुरवे नमः ॥५॥

नमस्ते भगवन्नाथ, शिवाय गुरुरूपिणे ॥
विद्यावतारसंसिध्यै, स्वीकृतानेकविग्रह ॥६॥

भवाय भवरूपाय, परमात्मस्वरूपिणे ॥
सर्वाज्ञानतमोभेदभानवे, चिद्घनायते ॥७॥

स्वतन्त्राय दयाक्लृप्तविग्रहाय परात्मने ॥
परतन्त्राय भक्तानां, भव्यानां भवदायिने ॥८॥

विवेकिनां विवेकाय, विमर्शाय विमर्शिनाम् ॥
प्रकाशिनां प्रकाशाय, ज्ञानिनां ज्ञानरूपिणे ॥९॥

पुरस्तात्पार्श्वयोः पृष्ठे, नमस्कुर्यामुपर्यधः ।।
सदा मच्चित्तरूपेण, विधेहि भवदासनम् ।।१०।।
त्वत्प्रसादादहं देव, कृतकृत्योऽस्मि सर्वतः ।।
मायामृत्युमहापाशाद्विमुक्तोऽस्मि शिवोऽस्मि च ।।११।।

इति स्तवं पठेत् । अशक्तश्चेदखण्डमण्डलमिति, अज्ञानेति,

ॐ नमोऽस्तु गुरवे तस्मै, सर्वदेवस्वरूपिणे ।
यस्य वाक्यामृतं हन्ति, विषं संसाररूपिणम् ।।

इति स्तुवीत ।

।। कुलकुण्डलिनीध्यानम् ।।

ततः प्रणम्य, श्रीगुरुं प्रसन्नं विभाव्य, मनसा तदाज्ञां गृहीत्वा, मूलाधारस्य त्रिकोणान्तर्गतामधोमुखीं स्वयंभूलिङ्गवेष्टिनीं, मूलविद्यास्वरूपिणीं, सूर्यकोटिप्रतीकाशां, चन्द्रकोटिसुशीतलां, विद्युत्कोटिसमप्रख्यां, बिसतन्तुतनीयसीं, प्रसुप्तभुजगाकारां, सार्धत्रिवलयान्वितां, नीवारांशुकसंकाशां, कुलकुण्डलिनीं ध्यात्वा, तस्यां हंस इति मन्त्रेण चैतन्यं संयोज्य,

।। कुलकुण्डलिनीतर्पणम् ।।

ततस्तां सुषुम्णावर्त्मना मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञेति-षट्चक्रभेदक्रमेण शिरसि सहस्रदलकमलकर्णिकास्थपरशिवेन संयोज्य, शम्भुना समं विहारेण बिन्दुसरन्माध्वीधारया संतर्प्य, प्रह्लादानन्द-नाथादीन् नवकुलगुरून् कुलमुखे ध्यायेद्यथा—

"मूलादि ब्रह्मरंध्रान्तं कुलं ध्यात्वा गुरून् स्मरेत्"

।। कुलगुरुध्यानम् ।।

महारसरसोल्लासहृदया, घूर्णलोचनाः ।।
कुलालिङ्गान्न संभिन्ना, चूर्णिताशेषमानसाः ।।

कुलशिष्यैः परिवृताः, पूर्णान्तःकरणोद्यताः ।।
वराभययुताः सर्वे, कुले तन्त्रार्थवादिनः ।।

इति ध्यात्वा,

।। कुलगुरुपादुकानमस्कारः ।।

| | | | | | |
|---|---|---|---|---|---|
| प्रह्लादानन्दनाथ | श्री | पादुकां | पूजयामि | नमः | । |
| वसिष्ठानन्दनाथ | ” | ” | ” | ” | । |
| क्रोधानन्दनाथ | ” | ” | ” | ” | । |
| शुकानन्दनाथ | ” | ” | ” | ” | । |
| ध्यानानन्दनाथ | ” | ” | ” | ” | । |
| बोधानन्दनाथ | ” | ” | ” | ” | । |
| सुखानन्दनाथ | ” | ” | ” | ” | । |

इत्येवं गुरून्नत्वा, ब्रह्मरन्ध्रात् कुलमातृकां पूर्वक्रमेण मूलाधारमानीय, संस्थाप्य, तत्प्रभापटलैः स्वदेहं पाटलं विचिन्त्य, चौरगणेशमन्त्रान्नेकादशसु द्वारेषु प्रत्येकं दशधा एकधा वा जपन् कपाटवन्न्यसेद्यथा--

।। चौरगणेशन्यासः ।।

क्रौमिति हृदये । ह्रीं ह्रीं दक्षिणनेत्रे तमेव वामनेत्रे ।
ह्रीं ह्रीं दक्षवामकर्णयोः । ह्रूं ह्रूं इति दक्षिणनासापुटे एवं वामे ।
ह्रीं ह्रीं ह्रीं ह्रीं ह्रीं मुखे । ऐं क्लीं नाभौ ।
ह्सौः लिङ्गमूले । क्लूं गुह्ये । ह्रूं ब्रह्मरंध्रे ।

प्रत्येकत्र एकधा दशधा वा न्यसेत् ।

।। दक्षिणकालिकामन्त्रविधिः ।।

ततः स्वकल्पोक्तप्राणायामं ऋष्यादिकराङ्गन्यासं विधाय, विनियोगं कुर्यात् ।

अस्य श्री दक्षिणकालिकादेव्याः मन्त्रस्य भैरवः ऋषिरुष्णिक् छन्दः, श्रीमद्दक्षिणकालिकादेवता, ह्रीं वीजं, ह्रूं शक्तिः, क्रीं कीलकं, मम धर्मार्थकाममोक्षार्थे जपे विनियोगः ।

॥ अथ ऋष्यादिन्यासः ॥

भैरवऋषये नमः शिरसि ।

उष्णिक् छन्दसे नमः मुखे ।

श्रीमद्दक्षिणकालिकादेवतायै नमः हृदि ।

ह्रीं बीजाय नमः गुह्ये ।

हूं शक्तये नमः पादयोः ।

क्रीं कीलकाय नमः सर्वाङ्गे ।

॥ इति ऋष्यादिन्यासः ॥

॥ अथ करन्यासः ॥

ॐ क्रां अङ्गुष्ठाभ्यां नमः ।

ॐ क्रीं तर्जनीभ्यां स्वाहा ।

ॐ क्रूं मध्यमाभ्यां वषट् ।

ॐ क्रैं अनामिकाभ्यां हुम् ।

ॐ क्रौं कनिष्ठिकाभ्यां वौषट् ।

ॐ क्रः करतलकरपृष्ठाभ्यां फट् ।

॥ इति करन्यासः ॥

॥ अथ हृदयादिन्यासः ॥

ॐ क्रां हृदयाय नमः ।

ॐ क्रीं शिरसि स्वाहा ।

ॐ क्रूं शिखायै वषट् ।

ॐ क्रैं कवचाय हुम् ।

ॐ क्रौं नेत्रत्रयाय वौषट् ।

ॐ क्रः अस्त्राय फट् ।

॥ इति हृदयादिन्यासः ॥

अथ ध्यानान्तरं—

सद्यश्छिन्नशिरः कृपाणमभयं हस्तैर्वरं बिभ्रतीम् ।
घोरास्यां शिरसःस्रजां सुरुचिरामुन्मुक्तकेशावलीम् ॥
सृक्वासृक्प्रवहां श्मशाननिलयां नृत्योत्सवालङ्कृतीम् ।
श्यामाङ्गीं कृतमेखलां शवकरैः देवीं भजे कालिकाम् ॥

इति ध्यात्वा, मूलेन व्यापकं न्यस्य, पीठन्यासं समाचरेत् ।

॥ अथ पीठन्यासः पूजनञ्च ॥

हृत्सरोजे सुधासिन्धुमध्ये द्वीपं सुवर्णजम् ।
परितः पारिजाताश्च, मध्ये कल्पतरुस्ततः ॥
तन्मूले हेमनिर्माणं, द्वारचतुष्टयभूषितम् ।
मण्डपं मन्दवातेन, पराक्रान्तं सुधूपितम् ॥
तत्र यन्त्रं प्रतिष्ठाप्य, तत्र पूजां समाचरेत् ।
इति ते कथितं कान्ते, न्यासजालं मनोहरम् ॥
परिपाटी गुरोर्ज्ञेया, न्यासानां चरणं प्रिये ।
तत्र पूजां प्रकुर्वीत, येन तन्मयतामियात् ॥
स्नायाच्च विमले तीर्थे, पुष्करे हृदयाश्रिते ।
शिवशक्ति समायोगः, सन्ध्या प्रोक्ता च तान्त्रिकैः ॥
विन्दुच्युत शुभाब्धिरतां, तर्पयेत्प्राणवल्लभे ।
ततस्तत् परिवाराणि, तच्छरीरे विलाप्य च ॥
उद्वर्तनादिकं दत्वा, स्नापयेद् द्रिव्यवारिणा ।
मृदुवस्त्रेण सम्प्रोक्ष्य, लोचने कज्जलं ददेत् ॥
ललाटे चैव सिन्दूरं, अलक्तं चरणाम्बुजे ।
चिन्तयेन्मनसामूर्तिं, वस्त्रालंकारभूषिताम् ॥
ततः सोऽहमितिध्यात्वा पाद्यं दद्यात्पदोः प्रिये ।
मौलावर्घ्यं मुखे तोयं गन्धोऽङ्गे सर्वतः क्षिपेत् ॥
सुगन्धीश्वेतलौहित्यं, जपापुष्पापराजिताम् ।
पदोः शीर्षे तथा कर्णे, कण्ठे मालां निधापयेत् ॥
सम्मुखे धूपदीपौ च, नैवेद्यं भोजयेद्यथा ।
कारणं पललं भूयः, कारणं मीनमुत्तमम् ॥
ततश्च कारणं देयं, ततो भर्जितशालिजम् ।
पुनर्मद्यं ततोऽपूपः, शष्कुलीं देवि ! दापयेत् ॥

ततो मद्यं प्रदेयं च, नाना ते मनसायुतम् ।
दधिक्षीराज्यसहितं, दापयेदोदनं प्रिये ।।

आचमनं ततो दद्यात्तज्जलं विनिवेदयेत् ।
ततो वै मानसं जाप्यं, कृत्वा तर्पणमाचरेत् ।।

स्तुत्वा दत्त्वा तदङ्गदेवतां प्रापयेद्यथा ।
स्व-स्व स्थाने ततः शेषशक्तीनां भोजयेत् स्वयम् ।।

ततः सोऽहमिति ध्यायेदात्मानं कालिकामयम् ।
इदं मानसमाख्यातं, पूजनं देवि ! दुर्लभम् ।।

एकान्ते निर्मले चित्ते हृदा शुद्धार्चनात् प्रिये ।
गुर्वचोचितकाले च, प्रातर्मध्याह्नकेऽपि च ।।

कर्तव्यमेतद्विधिवद्, गुरुपादप्रसादतः ।

।। इति पीठन्यासः मानसार्चनञ्च ।।

।। अथाजपासमर्पणम् ।।

तत्रादौ 'अद्य पूर्वेद्युरहोरात्राचरितमुच्छ्वासनिःश्वासात्मकं षट्शताधिकमेकविंशतिसहस्रसंख्यकं अजपाजपं मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञाब्रह्मरन्ध्रेषु चतुर्दल-षड्दल-द्वादशदल-षोडषदल-द्विदल-सहस्रदलेषु,स्वर्ण-विद्रुम-नील-पिङ्गल-धूम्र-विद्युत्-कर्पूर वर्णेषु क्रमेण, स्थिताभ्यो गणपति-ब्रह्म-विष्णु-रुद्र-जीवात्म-गुरुपादुकाभ्यो यथा भागशः समर्पयामि नमः'। इति संकल्प्य, समर्पयेद्यथा---

*मूलाधारमण्डपे स्वर्णवर्णे चतुर्दलकमले वादिसान्तचतुर्वर्णान्विते गायत्रीसहितायगणनाथाय अजपानां षट्शतानि समर्पयामि नमः ।।*

*स्वाधिष्ठानमण्डपे षट्दलकमले विद्रुमनिभे बादिलान्तषट्वर्णान्विते सावित्रीसहितायब्रह्मणेऽजपानां षट्सहस्रं समर्पयामि नमः ।।*

*मणिपूरमण्डपे नीलोत्पलनिभे डादिकान्तदशवर्णान्विते लक्ष्मीसहिताय विष्णवेऽजपानां षट्सहस्रं समर्पयामि नमः ।।*

अनाहतमण्डपे द्वादशदलपद्मे पिङ्गलवर्णे कादिठान्तद्वादशवर्णान्विते गौरीसहिताय रुद्रायाजपानां षट्सहस्रं जपं समर्पयामि नमः ॥

विशुद्धमण्डपे धूम्रवर्णे षोडशदलपद्मे षोडशस्वरसहिते क्रियाशक्तिसहिताय जीवात्मनेऽजपैकसहस्रं जपं समर्पयामि नमः ॥

आज्ञामण्डपे द्विदलपद्मे विद्युत्पुञ्जनिभे हक्षवर्णान्विते परमशिवशक्तिसहिताय परमात्मने सहस्रसंख्याकमजपाजपं समर्पयामि नमः ॥

ब्रह्मरन्ध्रे मण्डपे नानावर्णोज्वले पञ्चाशतवर्णान्विते सहस्रारपद्मस्थितायै सहस्रसंख्याकमजपाजपं समर्पयामि नमः ॥

इत्यजपाजपं समर्प्य जपमन्त्रेण प्राणानायम्य—

॥ अथाजपागायत्री जपविधिः ॥

ॐ अस्य श्रीअजपानामगायत्रीमन्त्रस्य **हंसः** ऋषिः, अव्यक्तगायत्री छन्दः, परमहंसो देवता, **हं** बीजं, **सः** शक्तिः, **सोऽहं** कीलकं, ॐ कारस्तत्त्वं ***नमः*** स्थानं, श्वेतो वर्णः, मम मोक्षार्थे जपे विनियोगः । इति संकल्प्य,

॥ अथ ऋष्यादिन्यासः ॥

ॐ हंसः ऋषये नमः शिरसि ।

ॐ अव्यक्तगायत्रीछन्दसे नमो मुखे ।

ॐ परमहंस देवतायै नमो हृदि ।

ॐ हं बीजाय नमः गुह्ये ।

ॐ कारतत्त्वाय नमः हृदि ।

ॐ सः शक्तये नमः पादयोः ।

ॐ उदात्तस्वराय नमः कण्ठे ।

ॐ सोऽहं कीलकाय नमः नाभौ ।

ॐ नमसे स्थानाय नमः मूर्ध्नि ।

ॐ श्वेताय वर्णाय नमः सर्वाङ्गे ।

॥ इति ऋष्यादिन्यासः ॥

॥ अथ करन्यासः ॥

ॐ हंसा सूर्यात्मने स्वाहा अङ्गुष्ठाभ्यां नमः ।

ॐ हंसो सोमात्मने स्वाहा मध्यमाभ्यां वषट् ।

ॐ हंसू निरञ्जनात्मने स्वाहा मध्यमाभ्यां वषट् ।

ॐ हंसै निराभासात्मने स्वाहा अनामिकाभ्यां हुम् ।

ॐ हंसौ अनन्ततनुः सूक्ष्मादेवी प्रचोदयात्
स्वाहा कनिष्ठिकाभ्यां वौषट ।

ॐ हंस अव्यक्तबोधात्मने स्वाहा करतलकरपृष्ठाभ्यां फट् ।

॥ इति करन्यासः ॥

इति हृदयादिषु न्यस्य ध्यायेत् । ध्यानं यथा—

॥ अजपाध्यानम् ॥

आराधयामि मणिसन्निभमात्मलिङ्गम्,
मायापुरी हृदय पङ्कज सन्निविष्टम् ।
शुद्धानदीविमलचित्तजलावगाहम्,
नित्यं समाधिकुसुमैरपुनर्भवाय ॥

ततो हंस इत्यजपामन्त्रं ॐ हंसो हंसाय विद्महे । सोऽहं हंसाय धीमहि । तन्नो हंसः प्रचोदयात् ॥ इति गायत्रीं च यथाशक्ति संजप्य, जपफलं समर्पयेत् ।

ततः एवं परिपूतमनःकायः—

अहं देवी न चान्योऽस्मि, ब्रह्मैवाहं न शोकभाक् ।
सच्चिदानन्दरूपोऽहं, नित्यमुक्तस्वभाववान् ॥

इत्येवं गुरुदेवात्मनामैक्यं भावयित्वा प्रार्थयेद्यथा—

त्रैलोक्यचैतन्यमये सुरेशि श्रीपार्वति त्वच्चरणाज्ञयैव ।
प्रातः समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्तयिष्ये ॥

**जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृतिः ।**
**केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ॥**

**॥ भूमिस्पर्शनम् ॥**

ततो गुरुपदिष्टमार्गेण नादानुसन्धानपूर्वकं स्वकार्यानुष्ठानाय—

**ॐ समुद्रमेखले देवि ! पर्वतस्तनमण्डले ।**
**विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥**

इति भूमिं प्रार्थ्य, वामपादपुरस्सरं तस्यां पादौ निधायावश्यककार्यार्थं ग्रामाद्वहिर्गच्छेदिति प्रातःकृत्यम् ।

॥ इति पूर्वार्धम् ॥

## ॥ अथ प्रातःकृत्यम्, उत्तरार्धम् ॥

**॥ शौचविधिः ॥**

ततो ग्रामाद्वहिर्निर्जनं शुद्धदेशं तृणादिनाच्छाद्य,

**मूत्रोच्चारसमुत्सर्गं दिवाकुर्यादुदङ्मुखः ।**
**दक्षिणाभिमुखो रात्रौ संध्ययोश्च यथा दिवा ॥**

इति मानवोक्तरीत्या मलं विसृज्य, दक्षिणपार्श्वस्थजलपूरित-कमण्डलुमादाय, प्रथमं सुनिर्णिक्ते गुदे मृदं दत्त्वा, पुनर्जलेन गन्धलेपापकर्षान्तं शौचं विधाय, तस्माच्छुद्धे जलादिदेशे गत्वा, विहित मृदमादाय,

**एकालिङ्गे गुदेतिस्त्रस्थैवैककरे दश ।**
**उभयोः सप्तदातव्या त्रीणि पदद्वयोरिति ॥**

श्लोकोक्तं मृच्छौचं गृहस्थः एतद्द्विगुणं ब्रह्मचारी त्रिगुणं वनस्थः, चतुर्गुणं यती कुर्यात् ।

ततो द्वादशगण्डूषाः कृत्वा, त्रिराचम्यानिषिद्धदिने चूतचम्पकजम्ब्वपा-मार्गादीनामन्यतमवृक्षसमीपं समागत्य,

**आयुर्बलं यशोवर्चः प्रजापशुधनानि च ।**
**श्रियं प्रज्ञां च मेधां च तन्नो देहि वनस्पते ॥**

इति सम्प्रार्थ्य, तस्माद्विहितमष्टादशद्वादशाङ्गुलादिपरिमितं दन्तधावनयोग्यं काष्ठमाहृत्य, तन्मूलेन प्रक्षाल्य,

*ॐ नमो भगवते मणिभद्राय यक्षसेनाधिपतये किलि-किलि स्वाहा ॥*

इति षोडशधाभिमन्त्र्य,

*क्लीं कामदेवाय सर्वजन प्रियाय नमः ॥* इति दन्तान् जिह्वां च विशोध्य, प्रक्षालितं दन्तधावनकाष्ठं पुरः शुद्धदेशे निक्षिप्य, मूलेन त्रिर्मुखं प्रक्षालयेत् ।

**॥ अथस्नानविधिः ॥**

तत्रादौ मृत्कुशादीन् स्नानसम्भारान् संगृह्य, तीर्थं प्राप्य, तान् शुद्धदेशे संस्थाप्य, जलं देवीरूपं विभाव्य, स्वर्णरजताङ्गुलीयकरूपकुलकुशमनामातर्जन्योः परिधायाचम्य, मलापकर्षणं कृत्वा, प्राणायामऋष्यादिकरषडङ्गन्यासान् विधाय *ॐ तत्सदद्येत्याद्युल्लिख्य,* **श्रीमदिष्टदेवतापूजाधिकारसंसिद्धिपूर्वकेष्टदेवताप्रीतयेऽमुकतीर्थे तान्त्रिकविधिना प्रातःस्नानमहं करिष्ये ॥**

इति संकल्प्य, स्नानमृत्तिकां नीत्वा करद्वयेन संघृष्य, सूर्याय संदर्श्य, **फ**डितिमन्त्रेण गात्रमनुलिप्य **व**मिति बीजेन गोकरीषं नासापुटद्वये संघृष्य, हृदि नाभौ जलाञ्जलीत्रयं दत्वा, **कुम्भमुद्रया** मूर्ध्नि त्रिभिरभिषिच्य **तत्त्वै**राचम्याङ्गानि संस्पृश्य, दक्षिणे त्रिकोणमुल्लिख्य, शंखावर्तक्रमेण विलोक्य, तत्र सूर्यमण्डलादङ्कुशमुद्रया,

**गङ्गे च यमुने चैव गोदावरि सरस्वति ।**
**नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥**

इत्यनेन तीर्थान्यावाह्य, ततः श्रवणादि सप्तरन्ध्रानि निरुध्य, त्रिर्मज्योन्मज्य, त्रिराचम्य, *क्रीं* इति बीजेन त्रिरघमर्षणं कृत्वा, **वरुणाय सोमाय भानवे** अञ्जलीत्रयं दत्वा जलाद्बहिर्गत्य, वाससी परिधाय, तिलकं धारयेत् । वीराणां भक्तानां गलान्तमेव मस्तके तु मार्जनमात्रमितितत्त्वम् ।

अशक्तस्य स्नानान्तराणि यथा—

**मान्त्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च ।**
**वारुणं मानसं चैव सप्तस्नानं प्रकीर्तितम् ॥**

तेष्वाद्यं **मान्त्रं** यथा—

*सन्तु आपस्त्वन्याः शन्नः समुद्रिया आपः । शन्नः सन्तु कुप्याः ॥* इति । द्रुपदेति, *आपो हि ष्ठेति*, *अघमर्षणेति* मन्त्र चतुष्टयेन मार्जनं कृत्वा, द्विराचमनं कुर्यादिति **मान्त्रं** प्रथमम् । आर्द्रवस्त्रेण शरीरप्रोक्षणात्मकं द्वितीय **भौमम्** । अथ भस्म करे गृहीत्वा जलेनालोड्य *प्रदीप्तचण्डाय नमः* ॥ इति मन्त्रेण दक्षाङ्गुष्ठलिप्त भस्मना ललाटमध्ये रेखां कृत्वा मध्यमानामातर्जनीभिस्सहिताभिस्त्रिभिरङ्गुलीभिर्नेत्रयुगमप्रमाणं त्रिपुण्ड्रम् *भगवते ब्रह्मणे नमः* ॥ इतिमन्त्रेण धारयेत् ।

ततो—

| | |
|---|---|
| *हव्यवाहनाय नमः* | हृदये, |
| *पूषाय नमः* | नाभिस्कन्धगलेषु, |
| *रुद्राय नमः* | दक्षबाहुमूले, |
| *आदित्याय नमः* | दक्षबाहुमध्ये, |
| *प्रभञ्जनाय नमः* | दक्षमणिबन्धे, |
| *वामदेवाय नमः* | वामबाहुमूले, |
| *शशिप्रभाय नमः* | वामबाहुमध्ये, |
| *वसवे नमः* | वामबाहुमणिबन्धे |
| *हरये नमः* | पृष्ठे, |
| *आत्मने महादेवाय परमात्मने सदाशिवाय नमः* | शिरसि, |
| *दिक्पालशक्तिमातृगणेभ्यो नमः* | सर्वाङ्गे, |

इत्येवं विभूतिधारणरूप**माग्नेयं** तृतीयम् । एतद्दिक्षु शुष्कं धार्यमिति भेदः ।

गोरजः स्पर्शनात्मकं चतुर्थं **वायव्यम्**। आतपस्पृष्टवृष्ट्या **दिव्यं** अवगाहात्मकं **वारुणं** पूर्वोक्तमेवेति षष्ठम्।

अथावशिष्ट**शाक्तमातरं** यथा—

**स्नानप्रकारे द्विविधे बाह्याभ्यन्तर भेदतः।**
**आन्तरं स्नानमभ्यन्तारहस्यमयि सादरात्॥**
**कथयामि भवध्वस्त्यै चतुर्वर्गफलाप्तये।**
**सरित्त्रयमनुसृत्य चरणत्रयमध्यतः॥**
**स्रवन्तं सच्चिदान्दं प्रवाहं भावगोचरम्।**
**विमुक्तिसाधनं पुंसां स्मरणादेव योगिनाम्॥**
**तेन प्लावितमात्मानं भावयेद भुवशान्तये।**
**इडा गङ्गेति चाख्याता पिङ्गला यमुनानदी॥**
**मध्ये सरस्वती ज्ञेया तत्प्रयागं इति स्मृतम्।**

इति **शाक्तमातरं** स्नानं सप्तमम्। एवं यथोक्तस्नानेषु चान्यतरेण स्नात्वा, परधृतशुद्धवसनः ***फडिति*** दिव्यास्त्रं भाले, ***स्त्रीमिति*** हृदि, ***ह्रीमिति*** शक्तिवीजं मध्ये एवं तिलकं कृत्वा, प्राणायामं कुर्यात्।

**॥ इति स्नानविधिः॥**

**॥ अथ सन्ध्योपासनम् ॥**

ततो वैदिकीसन्ध्यामुपास्य, तान्त्रिकीं कुर्यात्। तद्यथा—

तत्रादौ तीर्थतटमाश्रित्य, प्राङ्मुखोपविश्य, पूर्ववदाचम्याङ्गानि संस्पृश्य, पूर्ववत्तीर्थान्यावाह्य, पूर्वकल्पिततीर्थे संयोज्य, तत्र त्रिकोणमुद्राव्य, मूलमुच्चरन्, **अङ्कुशेन तत्त्वमुद्रया** वा तज्जलं त्रिभिर्भूमौ निक्षिप्य, सप्तधा स्वमस्तके च दत्त्वा, प्राणानायम्य ऋष्यादिकरषडङ्गन्यासान् विधाय, वामहस्ते किञ्चिज्जलं निधाय, दक्षहस्तेनाच्छाद्य, **सं वं रं यं हं** इति पाञ्चभौतिकमन्त्रैः सप्तधाभिमन्त्र्य, ततो वामहस्ताङ्गुलिरंध्राङ्गुलिना तज्जलविन्दुभिर्दक्षहस्तेन **तत्त्वमुद्रया** मूलेन सप्तधा स्वमस्तकेऽभिषिच्यावशिष्टं जलं दक्षहस्ते कृत्वा, तेजोरूपं विभाव्य, वामनासया आकृष्य, शरीरान्तः पापं प्रक्षाल्य, दक्षनासया

विरिच्य, तज्जलं पापपुरुषरूपं पुरः कल्पितवज्रशिलायां झटिति संताडच, हस्तौ प्रक्षाल्याचम्य, *ह्रीं हंसः मार्तण्डभैरवाय प्रकाशशक्ति-सहिताय इदमर्घ्यं स्वाहा* । इति मन्त्रेण भास्करायार्घ्यं समर्प्य, इष्टदेवतां सूर्यमण्डले विभाव्य, जलपूरिते ताम्रादिपात्रे चन्दन-कुसुमश्वेतापराजितापुष्पाणि निक्षिप्य, *उद्यदादित्यमण्डलमध्यवर्तिन्यै शिवचैतन्यमयायै श्रीमन्दक्षिणाकालिकायै इदमर्घ्यं स्वाहा* । इति मन्त्रेण गायत्र्याद्यष्टदेव्यै त्रिरर्घ्यं दद्यात् ।

ततो दक्षपादोपरि वामपादं कृत्वा, ऊर्ध्वबाहुः,

*ॐ हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्* । *नृषद्वरस-द्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्* ॥

इति ब्रह्मार्चां त्रिवारमुपस्थाप्य ध्यायेत् । कालभेदेन ध्यानानि यथा—

**उद्यदादित्यसङ्काशां, पुस्तकाक्षकरां स्मरेत् ।**
**कृष्णाजिनधरां, ब्राह्मीं ध्यायेत्तारकृतां वरे ॥** इति प्रातः ।

मध्याह्ने—

**श्यामवर्णां चतुर्बाहुं शंखचक्रलसत्कराम् ।**
**गदापद्मधरां देवीं सूर्यासनकृताश्रयाम् ॥** इति ।

**सायाह्ने वरदां देवीं गायत्रीं संस्मरेद्यतिः ।**
**शुक्लां शुक्लाम्बरधरां वृषासनकृताश्रयाम् ॥**
**त्रिनेत्रां वरदां पाशं शूलं च नृकरोटिकम् ।**
**सूर्यमण्डलमध्यस्थां ध्यायेद्देवीं समभ्यसेत् ॥**

इति सायङ्कालीनम् ।

एवं त्रिष्वपि कालेषु यथोक्तध्यानरूपाम्

कालिकायै विद्महे, श्मशानवासिन्यै धीमहि ।
तन्नो घोरे प्रचोदयात् ॥

इति गायत्रीमन्त्रं शक्तिपेक्ष्य संजप्य, गुह्येति मन्त्रेण देव्याः वामकरे समर्प्य, सूर्यमण्डलां देवीं सन्दिश्य, ध्यात्वा, षडङ्गादिकं न्यस्य, मूलमष्टोत्तरशतं प्रजप्य, प्रणमेत् । इति ।

महानिशाकालिकसंध्यायां तु ध्यानं नास्ति । अन्यत् सर्वं समानम् ।

॥ इति संध्याविधिः ॥

॥ अथ तर्पणविधिः ॥

पूर्ववदाचम्य, ऋष्यादिकं न्यस्य, पूर्ववत्तीर्थान्यावाह्य, मूलेन जलं सप्तधामृतमुद्रयामृतीकृत्य, तज्जले यन्त्रं विभाव्य, तत्र स्वहृदयादिष्ट-देवतां सपरिवारामानीय, षडङ्गेन सकलीकृत्य, कुण्डलिन्याः प्रयोगेणाभिषिच्य, प्रपूज्य, मूलमुच्चार्य, *साङ्गां सावरणां सवाहनां सायुधामिष्टदेवीं तर्पयामि स्वाहा* । इति सप्तधा त्रिधा सकृद्वा संतर्प्य,

*ॐ ब्रह्मभैरवं तर्पयामि नमः ।*

*ॐ रुद्रभैरवं तर्पयामि नमः ।*

*ॐ हसक्षमलवरयूं आनन्दभैरवाय वषट् आनन्दभैरवं तर्पयामि नमः ।*

*ॐ हसक्षमलवरयीं आनन्दभैरविदेव्यै वौषट्; आनन्दभैरवीं तर्पयामि स्वाहा ।*

॥ इति देवतातर्पणम् ॥

पादुकामन्त्रमुच्चार्य, *श्रीमदमुकानन्दनाथ. अमुकीदेवी वा श्रीपादुकां पूजयामि नमः स्वाहा ॥* एवं परमगुरुपरापरगुरुपरमेष्ठिगुरून् संतर्प्य,

॥ अथऋषितर्पणम् ॥

| | | |
|---|---|---|
| महादेवीं | तर्पयामि | स्वाहा ॥ |
| महादेवानन्दनाथं | तर्पयामि | नमः ॥ |
| त्रिपुरां | ” | ” ॥ |
| भैरवानन्दनाथं | ” | ” ॥ |
| ब्रह्मानन्दनाथं | ” | ” ॥ |

| | | | |
|---|---|---|---|
| पूर्णदेवानन्दनाथं | तर्पयामि | नमः | ॥ |
| चलचित्तानन्दनाथं | ,, | ,, | ॥ |
| कुमारानन्दनाथं | ,, | ,, | ॥ |
| क्रोधानन्दनाथं | ,, | ,, | ॥ |
| वरदानन्दनाथं | ,, | ,, | ॥ |
| स्मरदीपानन्दनाथं | ,, | ,, | ॥ |
| मायां | ,, | स्वाहा | ॥ |
| मायावतीं | ,, | ,, | ॥ |

॥ इति ऋषितर्पणम् ॥

॥ अथ पितृतर्पणम् ॥

| | | | |
|---|---|---|---|
| विमलानन्दनाथं | तर्पयामि | नमः | ॥ |
| कुशलानन्दनाथं | ,, | ,, | ॥ |
| भीमसेनानन्दनाथं | ,, | ,, | ॥ |
| सुधाकरानन्दनाथं | ,, | ,, | ॥ |
| मीनानन्दनाथं | ,, | ,, | ॥ |
| गोरक्षानन्दनाथं | ,, | ,, | ॥ |
| भोजदेवानन्दनाथं | ,, | ,, | ॥ |
| प्रजापत्यानन्दनाथं | ,, | ,, | ॥ |
| मूलदेवानन्दनाथं | ,, | ,, | ॥ |
| रतिदेवानन्दनाथं | ,, | ,, | ॥ |
| विघ्नदेवानन्दनाथं | ,, | ,, | ॥ |
| हुताशनानन्दनाथं | , | ,, | ॥ |
| समयानन्दनाथं | ,, | ,, | ॥ |
| संतोषानन्दनाथं | ,, | ,, | ॥ |

॥ इति पितृतर्पणम् ॥

ततो मूलविद्यान्ते महाकालसहिते दक्षिणे कालिके मातस्तर्पयामि स्वाहा ।

इति दशधा संतर्प्य परिवारदेवतास्तर्पयेत् ।

॥ अथपरिवारतर्पणम् ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| कालीं | तर्पयामि | स्वाहा | ॥ | कपालिनीं | तर्पयामि | स्वाहा | ॥ |
| कुल्लां | ,, | ,, | ॥ | कुरुकुल्लां | ,, | ,, | ॥ |
| विरोधिनीं | ,, | ,, | ॥ | विप्रचित्तां | ,, | ,, | ॥ |
| उग्रां | ,, | ,, | ॥ | उग्रप्रभां | ,, | ,, | ॥ |
| दीप्तां | ,, | ,, | ॥ | नीलां | ,, | ,, | ॥ |
| घनां | ,, | ,, | ॥ | बलाकां | ,, | ,, | ॥ |
| मात्रां | ,, | ,, | ॥ | मुद्रां | ,, | ,, | ॥ |
| मितां | ,, | ,, | ॥ | ब्राह्मीं | ,, | ,, | ॥ |
| नारायणीं | ,, | ,, | ॥ | माहेश्वरीं | ,, | ,, | ॥ |
| चामुण्डां | ,, | ,, | ॥ | कौमारीं | ,, | ,, | ॥ |
| अपराजितां | ,, | ,, | ॥ | वाराहीं | ,, | ,, | ॥ |

नारसिंहीं तर्पयामि स्वाहा ॥

॥ इति परिवारमातृकातर्पणम् ॥

॥ अथाष्टभैरवतर्पणम् ॥

| | | | |
|---|---|---|---|
| असिताङ्गभैरवं | तर्पयामि | नमः | ॥ |
| रुरुभैरवं | ,, | ,, | ॥ |
| चण्डभैरवं | ,, | ,, | ॥ |
| क्रोधभैरवं | ,, | ,, | ॥ |
| उन्मत्तभैरवं | ,, | ,, | ॥ |
| कपालीभैरवं | ,, | ,, | ॥ |
| भीषणभैरवं | ,, | ,, | ॥ |
| संहारभैरवं | ,, | ,, | ॥ |

॥ इत्यष्टभैरवतर्पणम् ॥

॥ अथदिग्देवतास्त्रयोस्तर्पणम् ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| इन्द्राग्नीं | तर्पयामि | नमः | ॥ | यमं | तर्पयामि | नमः | ॥ |
| निर्ऋतिं | ,, | ,, | ॥ | वरुणं | ,, | ,, | ॥ |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| वायुं | तर्पयामि | नमः | ॥ | सोमं | तर्पयामि | नमः | ॥ |
| ईशानं | " | " | ॥ | अनन्तं | " | " | ॥ |
| ब्रह्म | " | " | ॥ | खड्गं | " | " | ॥ |
| मुण्डं | " | " | ॥ | अभयवरे | " | " | ॥ |

इति तर्पयेत् । प्रत्येकपरिवारतर्पणाशक्तौ मूलमुच्चार्य *साङ्गां सपरिवारां सवाहनां सायुधां महाकालसहितां श्रीदक्षिणकालिकां तर्पयामि नमः* ॥ इति यथाशक्ति देवतामेव तर्पयेत् । इति सम्प्रदायः ॥

॥ इतिपरिवारतर्पणम् ॥

एवं संध्याशक्तावपि त्रिकालं देवीं ध्यात्वा, यथाशक्ति मूलं गायत्रीं वा जपेत् । न तु लोपयेत् । इति ।

ततः ***ह्रीं हंसः मातर्भैरवाये***ति मन्त्रेण त्रिरर्घ्यं दद्यात् । मूलमुच्चार्य, **उद्यदादित्ये**ति मन्त्रेण महाकालसहिताय इष्टदेवतां त्रिरर्घ्यं दद्यात्, गायत्रीं च यथाशक्ति प्रजप्य, देव्याः वामहस्ते रक्तं तेजोमयं जपफलं **गुह्ये**ति मन्त्रेण समर्प्य, सूर्यमण्डले देवीं विसर्जयेदिति तीर्थं विसृज्य, जलपूरितशंखादिपात्रहस्तः स्तवादिकं पठन् एकलिङ्गाद्यन्यतमयाग-स्थानमागच्छेत् ।

॥ इतितर्पणम् ॥

॥ इति प्रातःकृत्यमुत्तरार्धम् ॥

## ॥ अथपूजापद्धतिः ॥

॥ अथपीठध्यानम् ॥

तत्रादौ यागस्थानमागत्य तद्द्वाराद्बहिः खे ॐ *वज्रोदके हुं फट् स्वाहा* ॥ इति मन्त्रेण हस्तस्थजलपात्रं भूमौ निधाय, तज्जलं पूजार्थं संरक्ष्य, तस्मात् किञ्चिज्जलमन्यजले निक्षिप्य, तेन वारिणा ॐ *ह्रीं विशुद्धसर्व-*

*पापानि ममाशेषवैकल्यमपनय हुं फट् स्वाहा* ।। इति मन्त्रेण हस्तौ पादौ प्रक्षाल्य, सुवर्णरजताङ्गुलीयकरूपं कुलकुशं तर्जन्यनामिकयो-रन्यतरे संधार्य, पीठं ध्यायेद्यथा—

**श्मशानं तत्र संचिन्त्य, तत्र कल्पद्रुमं स्मरेत् ।**
**तन्मूले मणिपीठञ्च नानामणि विभूषितम् ।**
**नानालङ्कारभूषाढ्यं मुनिदेवैश्च मण्डितम् ।।**
**शिवाभिर्बहुमांसास्थिमोदमानाभिरन्ततः ।**
**चतुर्दिक्षु शवमुण्डचिताङ्गारास्थिभूषितम् ।।**
**तन्मध्ये भावयेद् देवीं यथोक्तध्यानमार्गतः ।।**

इति पीठं ध्यात्वा,

*ॐ मणिधरि सर्ववशङ्करि हुं फट् स्वाहा* ।। इति मन्त्रेण शिखां बध्वा, हुं फट् *स्वाहा* इति भूमिं संशोध्य।

अर्घ्यस्थापनं कुर्यात् ।

**।। इतिपीठध्यानम् ।।**

**।। अथसामान्यार्घ्यस्थापनम् ।।**

स्व वामे *विन्दुत्रिकोणवृत्तचतुरस्रा*त्मकं मण्डलं निर्माय, तत्र, *ॐ आधार-शक्तये नम* इति सम्पूज्य, ***फडि***ति प्रक्षालितं पात्रं संस्थाप्य, ***नमः*** इति जलेनापूर्य, ***क्रों इत्यङ्कुश***मुद्रया ।

**गङ्गे च यमुने चैव गोदावरि सरस्वति ।**
**नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ।।**

इत्यर्कमण्डलात्तीर्थान्यावाह्य, प्रणवेन गन्धपुष्पे तत्र निक्षिप्य, ***वमि***ति ***धेनु***मुद्रां प्रदर्श्य, तदुपरि *ॐ* इति दशधा संजप्य, दधिदूर्वाक्षतबिल्व-पत्रापराजितापुष्पौड्रपुष्परक्तचन्दनानि तत्रनिक्षिपेत्, तदभावे मानसं परिकल्पयेदितिसामान्यार्घ्यं स्थाप्य,

**।। इतिसामान्यार्घ्यस्थापनम् ।।**

॥ अथद्वारदेवतापूजनम् ॥

तज्जलेन त्रियागद्वारं **फडिति** मन्त्रेण सम्प्रोक्ष्य,

ॐ गां गणपतये नमो द्वारोर्ध्वं ।
ॐ क्षां क्षेत्रपालाय नमः वामे ।
ॐ वां वटुकाय नमः दक्षिणे ।
ॐ यां योगिनीभ्यो नमः अधः ।

सम्पूज्य,

ॐ गां गङ्गायै नमः ॥ ॐ यां यमुनायै नमः ॥
ॐ श्रीं लक्ष्म्यै नमः ॥ ॐ ऐं सरस्वत्यै नमः ॥

इति द्वारचतुष्टयेषु सम्पूज्य, फट् देहल्यै नमः इति देहलीं सम्पूज्य,

ॐ ब्राह्म्यै नमः ॥ ॐ माहेश्वर्यै नमः ॥
ॐ कौमार्यै नमः ॥ ॐ वैष्णव्यै नमः ॥
ॐ वाराह्यै नमः ॥ ॐ इन्द्राण्यै नमः ॥
ॐ चामुण्डायै नमः ॥ ॐ महालक्ष्म्यै नमः ॥

इत्यष्टमातृका अष्टदिक्षु, एते द्वारदेवताः सम्पूज्य,

॥ इतिद्वारपूजनम् ॥

॥ अथविघ्नोत्सारणम् ॥

**द्वारपा देववेदेशाः द्वारं रक्षन्तु यत्नतः ।**
**निवार्य विघ्नसंघातमित्याज्ञा पारमेश्वरी ॥**

इति सम्प्रार्थ्य, वामाङ्गं संकोचयन्, दक्षपादपुरस्सरं यागमण्डपान्तः प्रविश्य, ईशाने ब्रह्मणे नमः । नैऋर्त्ये वास्तु पुरुषाय नमः । इति पूजयेत् ।

ततः ॐ सर्वविघ्नानुत्सारय फट् स्वाहा, इति **नाराच**मुद्रयाक्षतप्रक्षेपादिना-दिव्यन्तरिक्षभूगतान् त्रिविधविघ्नानुत्सार्य, भूमिं स्पृष्ट्वा ।

*ॐ पवित्रवज्रभूमिं हुं फट् स्वाहा* । इति भूमिमभिमन्त्र्य आसनं शोधयेत् ।

॥ इतिविघ्नोत्सारणम् ॥

॥ अथासनशोधनोपवेशने ॥

पूर्वशोधितभूमौ त्रिकोणमालिख्य, तत्र *ॐ आधारशक्तिभ्यो नमः* इति सम्पूज्य, तत्र शवासनं तदभावे कृष्णसारद्वीपिचर्मकम्बलाद्यन्यतममेकहस्तद्विहस्तयोरन्यतरप्रमाणपरिमितं चतुरङ्गुलोच्छ्रितमास्थाय तत्र कुशशतकनिर्मितं शवं स्थाप्य, तत्र प्राणान् स्थापयेद्यथा—*हस्लौं* इति प्रेतबीजं तत्र संलिख्य आसनं धृत्वा,

**ॐ अस्य श्रीआसनशोधनमन्त्रस्य मेरुपृष्ठ ऋषिः, सुतलं छन्दः, कूर्मो देवता आसनारोपणे विनियोगः ।**

ततः,

**पृथ्वि त्वया धृता लोका, देवि त्वं विष्णुनाधृता ।**
**त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥**

इति पठित्वा, *ॐ आः सुरेखे वज्ररेखे हुं फट् स्वाहा* इति मन्त्रेण रक्तचन्दनपुष्पाभ्यामासनमभ्यर्च्य, तत्र पद्मस्वस्तिकवीराद्यन्यतमासनेनोपविशेत् ।

॥ इतिआसनशोधनोपवेशने ॥

॥ अथविजयास्वीकारविधिः ॥

ततः *ॐ मणिधरि वज्रिणि महाप्रेति सरे रक्ष रक्ष हुं फट् स्वाहा* इति वस्त्राञ्चले ग्रन्थिं बध्वा, *ॐ आः हुं फट् स्वाहा* इति मन्त्रेण शिरसादि पादपर्यन्तं, पादादि हृदयान्तं, हृदादि मुखान्तं व्यापकतया कायवाक्चित्तात्मनः संशोध्य, यथामन्त्रं समयां संशोध्य गृह्णीयात् । तद्विधिर्यथा—

संविदं पुरतः संस्थाप्य,

ॐ संविदः दक्षिणामूर्तिर्ऋषिः, पङ्क्तिश्छन्दः, सदाशिवो देवता, संविद्ध्याने पाने विनियोगः ।

इति विनियोगानन्तरम्—

ॐ सिद्धाद्यां शिवमोहिनीं करलसत्पाशाङ्कुशां भैरवीम् ।
भक्ताभीष्टफलप्रदां सकुशलां संसारमोहच्छिदाम् ।।
पीयूषाम्बुधिमन्मथोद्भवरसां संविद्विलासप्रदाम् ।
वीराराधितपादुकां स्वविजयां ध्यायेज्जगन्मोहिनीम् ।।

इति ध्यात्वा, प्रत्येकं शोधयेत् । तद्यथा—

ॐ संविदे ब्रह्मसम्भूते ब्रह्मपुत्रि सदानघे ।
भैरवानां च तृप्त्यर्थं पवित्रा भव सर्वदा ।।

ॐ ब्राह्म्यै नमः स्वाहा ।।

ॐ सिद्धिमूलक्रिये देवि हीनबोधप्रबोधिनि ।
राजाप्रजावशङ्करि शत्रुकण्ठत्रिशूलिनि ।।

ॐ ऐं क्षत्रियायै नमः स्वाहा ।।

ॐ अज्ञानेन्धनदीप्ताग्ने ज्ञानाग्ने ब्रह्मरूपिणि ।
आनन्दस्याहुतिं प्रीतिं सम्यज्ज्ञानं प्रयच्छ मे ।।

ॐ ह्रीं वैश्यायै नमः स्वाहा ।।

ॐ नमस्यामि नमस्यामि योगमोक्ष प्रदायिनि ।
त्रैलोक्यविजये मातः समाधिफलदा भव ।।

ॐ क्लीं शूद्रायै नमः स्वाहा ।।

एवं पृथक्-पृथक् संशोध्य, *ॐ अमृते अमृतोद्भवे अमृतवर्षिणि अमृतमाकर्षयाकर्षय सिद्धिं देहि श्रीकालीपदमेव समानय स्वाहा* । इति मन्त्रेण सर्वाः शोधयेत् ।

ततो ***यमिति*** वायुवीजेन संशोष्य, ***रमिति*** वाह्निना तद्दोषं संदह्य ***वमिति*** वरुणेनामृतीकृत्य, ***धेनुमुद्रां*** प्रदर्श्य, षडङ्गैः सकलीकृत्य, ***योनिना*** सन्दीप्य, ***मूलेन*** सप्तधाभिमन्त्र्य, स्वदक्षे गुरुपङ्क्तिं, तत्रत्पुत्रभ्रात्रादीनेवं ज्ञानवृद्धान्, तपोवृद्धान्, ज्येष्ठांश्च स्वस्वासने पृथक्-पृथक् शक्तिसहितान्, युग्मक्रमेण सर्वान्, यथाधिकारं गन्धपुष्पैः समभ्यर्च्य, पूर्वशोधितां विजयां शर्करया समालोडचोपदंशयुक्तमादौ गुरुपत्न्यै, तदन्तः गुरवे, ततः स्व शक्त्यै तदनु दक्षस्थ श्रेष्ठेभ्यः, तत्पश्चाद्वामस्थ कनिष्ठेभ्यः पिरिविष्य, स्वपात्रे च समादाय, सामयिकैः सह—

**कालिन्दीजलसंदोहकान्ति सन्तापहारिणीम् ।**
**वराभयसमायुक्तां सव्येतरभुजद्वयाम् ।।**
**नानारोगहरां देवीं सर्वसौख्य प्रदायिनीम् ।**
**विजयां त्वामहं वन्दे सिद्धां ज्ञानपरामिति ।।**

ध्यात्वा,

**सिद्धिमूलि विशालाक्षि सर्वसिद्धिप्रदायिनि ।**
**सुमित्रातुलिनि देवि जया चार्चिता परा ।।**
**अमृता तुलसी तुङ्गा तेजोमयि सुरेश्वरि ।**
**एतानि दशनामानि करे कृत्वा तु यः पठेत् ।।**
**दुःख दारिद्रचनाशः स्यात् परं ज्ञानमवाप्नुयात् ।।**

इत्येवं स्तुत्वा—

**ॐ समिद्देवीं गरीयसीं गुणान्वितां वैगुण्यविध्वंसिनीम् ।**
**मयामोहमदान्धकारशमनीं तापत्रयोन्मूलिनीम् ।।**
**वन्दे वीरमुखाम्बुजे विलसिनीं संवेदिनीं दीपिकाम् ।**
**ब्रह्मज्ञानमयीं विवेकजनिकां विज्ञानमूर्त्यै नमः ।।**

इति नमस्कृत्य, छोटिकाभिर्दशदिग्बन्धं विधाय, तालत्रयपुरःसरं **दिव्यदृष्ट्या** वामपादपादाघातैरिति त्रिभिर्दिव्यन्तरिक्षभूगतान् त्रिविध विघ्नान् विघातयेत्।

तत**स्तत्त्व**मुद्रया ब्रह्मरन्ध्रे सहस्रारपद्मे श्रीगुरुं त्रिस्सन्तर्प्य हृदीष्टदेवीं सप्तधा त्रिधैव वा सन्तर्प्य नाना स्वादुयुतां विजयामिष्टदेव्यै निवेद्य, जिह्वान्तां कुलकुण्डलिनीं विभाव्य,

*ॐ वदवद वाग्वादिनि मम जिह्वाग्रे स्थिरी भव सर्वशत्रुवशङ्करि स्वाहा।*

इति कुण्डलिनी मुखे जुहुयात्। एवमन्येऽपि साधकाः कुर्युः।

**॥ इति विजयास्वीकारविधिः ॥**

**॥ अथ पूजोपक्रमः ॥**

ततोऽष्टोत्तरशतं मूलमन्त्रं संजप्य, देवीध्यानपरायणः देवीरूपं जगत् पश्यन् साधकेभ्यः स्तेयतां मूले दत्त्वा, तेभ्यः प्रणम्य, तेभ्य आज्ञामनुज्ञामादायानन्दमयो भूत्वा, वामकर्णे *ॐ अमुकानन्दगुरुपादुकायै नमः*, दक्षिणकर्णे *गं गणपतये नमः*, मध्ये *इष्टदेव्यै नमः*, इत्येवं नमस्कृत्य, पूर्वोक्तरीत्या, सामान्यार्घ्यं स्थाप्य, तज्जलेन पूजोपकरणमभ्युक्ष्य, स्वदक्षे गन्धपुष्पादिकं, वामे सुगन्धितजलं, देव्याः पश्चिमे कुलद्रव्यमन्यत्सर्वं च वामे न्यस्य, सामान्यार्घ्यजलं चुलुके कृत्वा, तेन—

*ॐ पुष्पकेतु राजाह ते शताय सम्यक् विधाय पुष्पे पुष्पे महापुष्पे सुपुष्पे पुष्पसम्भवे पुष्पांश्चैवावकीर्णे हुं फट् स्वाहा।*

इति मन्त्रेण पुष्पाण्यभिमन्त्रयेत्।

ततः स्वर्णादिपीठे कुलरसरक्तचन्दनगोरोचनालिप्ते *आः सुरेखे वज्ररेखे हुं फट् स्वाहा*, इति हस्तं दत्त्वा, आत्मरक्षां विधाय, चन्दनाक्तानि पुष्पाणि कराभ्यां मर्दयित्वा तानि वामहस्ते समादाय, आघ्राय,

**ते सर्वे विलयं यान्तु ये मां हिंसन्ति हिंसकाः।**
**मृत्युरोगभयक्लेशाः पतन्तु रिपुमस्तके ॥**

इति मन्त्रेण ऐशान्यां दिशि दूरतः क्षिप्त्वा, मूलमन्त्रेण तालत्रयं दिग्बन्धनं च कृत्वा, *क्रीं हूं स्त्रीं ह्रीं फट्* इति पञ्चाक्षरीं कालिकाकुल्लुकां मूर्ध्नि चिन्त्य, आचमनं कुर्यात्—

*क्रीं* अनेन त्रिराचम्य, *काल्यै नमः*। *कपालिन्यै नमः* इति द्विरोष्ठावुन्मृज्य, *कुल्लुकायै नमः* इति करं प्रक्षाल्य, जलेन सप्तच्छिद्राण्युपस्पृशेत्

| | |
|---|---|
| *कुरुकुल्लायै नमः* | आस्ये। |
| *विधिन्यै नमः, विप्रचित्तायै नमः* | नासापुटयोः। |
| *उग्रायै नमः, उग्रप्रभायै नमः* | नेत्रयोः। |
| *दीप्तायै नमः, नीलायै नमः* | श्रोत्रयोः। |
| *घनायै नमः, बलाकायै नमः* | |
| *मात्रायै नमः,* | शिरसि। |
| *मुद्रायै नमः, मितायै नमः* | भुजयोः। |

एवमाचम्य, हुं हं ह्रीं *अस्त्राय* फट् अनेन दिग्बन्धनं कृत्वा प्राणायामं कुर्यात्। यथा—

मूलाधारे मनः संयोज्य, दक्षिणाङ्गुष्ठेन दक्षिणनासापुटं धृत्वा, प्रणवं मूलाद्यबीजं वा षोडशवारं जपन्, वामनासया वायुमापूर्य, कनिष्ठानामिकाभ्यां वामनासापुटं धृत्वा, चतुःषष्ठिवारं जपन्, वायुं स्तम्भयित्वा, दक्षिणेन द्वात्रिंशद्वारं जपन् रेचयेदिति प्रथमः। पुनस्तेनैव मानेन दक्षिणनासापुटे प्रपूर्य, वामेन रेचयेदिति द्वितीयः, पुनराद्यवत्तृतीयः। मूलेन चैकेन पूरकं, चतुर्भिः कुम्भकं, द्वाभ्यां रेचकमित्येवं प्राणायामत्रयं विधाय, भूतशुद्धिं कुर्यात्।

॥ इतिपूजोपक्रमः ॥

॥ अथभूतशुद्धिः ॥

हुंकारेण मूलाधारात् कुण्डलिनीमुत्थाप्य, जीवात्मना संयोज्य, *हंस* इति मन्त्रेण परमात्मनि विलापयेत्।

ततः पादादिजानुपर्यन्तं स्थितां पृथिवीमण्डलं चतुरस्त्रं, पीतवर्णं, लं बीजयुक्तं, ध्यायेत् ।

जान्वादिनाभिपर्यन्तं, अम्बुमण्डलं, अर्धचन्द्राकारं, शुद्धवर्णं, वं बीजयुक्तं ध्यायेत् ।

नाभ्यादिहृदयपर्यन्तं, अग्निमण्डलं, त्रिकोणं रक्तवर्णं रं बीजयुक्तं ध्यायेत् ।

हृदादिकण्ठपर्यन्तं, वायुमण्डलं, षट्कोणं, धूम्रवर्णं, यं बीजयुक्तं, ध्यायेत् ।

कण्ठादिशिरोपर्यन्तं, आकाशमण्डलं, वर्तुलाकारं, शुक्लवर्णं, हं बीजयुक्तं ध्यायेत् ।

तच्चाङ्कारे, तन्महत्तत्त्वे, तच्चप्रकृतौ, तच्चब्रह्मणि विलापयेत् ।

**ततः पुरुषनिभं पापमनादिभवसञ्चितम् ।**
**ब्रह्महत्याशिरस्कञ्च स्वर्णस्तेयभुजद्वयम् ।।**
**सुराधानहृदा युक्तं गुरुतल्पकटिद्वयम् ।**
**तत्संयोगपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ।।**
**उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ।**
**खड्गचर्मधरं पापमङ्गुष्ठपरिमाणकम् ।।**
**अधोमुखं कृष्णवर्णं वामकुक्षौ विचिन्तयेत् ।।**

इति पापपुरुषं विचिन्त्य, ***यमि***तिबीजेन षोडशवारमावृत्तेन वामनासया पापपुरुषभस्म रेचयेत् ।

ततो ***वमि***तिबीजजपात्, ललाटचन्द्रात्, मातृकावर्णमयीममृतवृष्टिं निपात्य, भस्माप्लाव्य, न्यासक्रमेणावयवान् निष्पाद्य, ***लमि***तिबीजजपाद् दृढीकृत्य, परमात्मनः प्रकृतिः, तस्याः महत्तत्त्वं ततोऽहङ्कारं, तस्मादाकाशं, ततोवायुं, तस्मात्तेजः, तस्माज्जलं, तस्मात् पृथिवीं निर्गम्य, स्व-स्व स्थाने स्थापयित्वा, ब्रह्मरन्ध्रस्थं परमात्मसकाशात् ***सोऽहमि***ति मन्त्रेण जीवात्मानं प्रदीपकलिकाकारं कुण्डलिनीद्वारा हृदयकमलमानीय

कुण्डलिनीं मूलाधारे स्थापयित्वा स्वशरीरं निरस्तसमस्तकिल्विषं देवताराधनयोग्यं विभावयेत् ।

॥ इतिभूतशुद्धिः ॥

॥ अथात्मनि देवताप्राणप्रतिष्ठा ॥

ततो देवीरूपमात्मानं विभाव्य, हृदि हस्तं दत्त्वा, आं ह्रीं क्रों हंसः दक्षिणकालिकायाः प्राणाः इह प्राणाः ।२, जीव इहस्थिताः ।२, सर्वेंद्रियाणि ।२, वाङ्मनोनयनश्रोत्रघ्राणप्राणाः ।२, इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा । इति प्राणप्रतिष्ठां विधाय ऋष्यादिन्यासं कुर्यात् ।

॥ इत्यात्मनि देवताप्राणप्रतिष्ठा ॥

॥ अथऋष्यादिन्यासः ॥

**अस्य दक्षिण कालिकामन्त्रस्य भैरवः ऋषिः, उष्णिक् छन्दः, श्रीदक्षिण-कालिकादेवता, ह्रीं बीजं, हुं शक्तिः, क्रीं कीलकं अभीष्टसिद्ध्यर्थे जपे विनियोगः** । इति कृताञ्जलिरुक्त्वा---

भैरवऋषये नमः शिरसि ।
उष्णिक् छन्दसे नमः मुखे ।
श्रीमद्दक्षिणकालिकादेवतायै नमः हृदि ।
ह्रीं बीजाय नमः गुह्ये ।
हूं शक्तये नमः पादयोः ।

इति अङ्गुष्ठविवर्जिताभिरङ्गुलीभिर्विन्यस्य, क्रीं कीलकाय नमः सर्वाङ्गे । इति व्यस्तहस्तद्वयेन । इति विन्यस्य—

ॐ क्रां अङ्गुष्ठाभ्यां नमः ।
ॐ क्रीं तर्जनीभ्यां नमः ।
ॐ क्रूं मध्यमाभ्यां नमः ।
ॐ क्रैं अनामिकाभ्यां नमः ।
ॐ क्रौं कनिष्ठिकाभ्यां नमः ।
ॐ क्रः करतलकरपृष्ठाभ्यां नम ।

ॐ क्रां हृदयाय नमः इति तर्जनीमध्यमानाभिर्विन्यसेत्। अग्रे अङ्गुलिसंख्या तर्जन्यादिज्ञेया।

ॐ क्रीं शिरसे स्वाहा। ॐ क्रूं शिखायै वषट् बद्धमुष्टिरधोमुखाङ्गुष्ठेन।

ॐ क्रैं कवचाय हुम्। ॐ क्रौं नेत्रत्रयाय वौषट्। ॐ क्रः अस्त्राय फट्। इति तर्जनीमध्यमाभ्यां तालत्रयं दिग्बन्धं च कृत्वा, कालीकल्पोक्तमातृकान्यासान् विधाय,

॥ इतिऋष्यादिन्यासः ॥

॥ अथवर्णमातृकान्यासः ॥

तत्रादौ वर्णन्यासं कुर्याद्यथा

| | |
|---|---|
| अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं | हृदि। |
| एं ऐं ओं औं अं अः कं खं गं घं | दक्षिण भुजे। |
| ङं चं छं जं झं ञं टं ठं डं ढं | वाम भुजे। |
| णं टं थं दं धं | दक्षिण जङ्घायाम्। |
| नं पं फं बं भं मं | वामजङ्घायामङ्गुष्ठाभ्यां सर्वत्रानामया न्यास्यः। |
| यं रं लं वं शं षं सं हं लं क्षं | पादयोः। |

ततो मूलमुच्चरन् पादादिशिरोऽन्तं शिरादिपादान्तं सकृद्व्यापकं विन्यस्य,

॥ अथस्नानविधिः ॥

**ॐ अस्य श्रीमदन्तर्मातृकान्यासस्य ब्रह्माऋषिर्गायत्रीछन्दः अन्तर्मातृकासरस्वतीदेवता, व्यञ्जनानि बीजानि, स्वराः शक्तयः अव्यक्तं कीलकं श्रीमद्दक्षिणकालिकायाः पूजाङ्गत्वेन विनियोगः। इति विनियोज्य ऋष्यादिकं न्यसेद्यथा—**

ब्रह्मणे ऋषये नमः शिरसि ।
गायत्री छन्दसे नमो मुखे ।
अन्तर्मातृकासरस्वत्यै देवतायै नमो हृदि ।
व्यञ्जनबीजाय नमो गुह्ये ।
स्वरेभ्यः शक्तिभ्यो नमः पादयोः ।
अव्यक्तकीलकाय नमः सर्वाङ्गे ।

इति । ततः करन्यासं यथा—

ॐ अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः ।
ॐ इं चं छं जं झं ञं ईं तर्जनीभ्यां स्वाहा ।
ॐ उं टं ठं डं ढं णं ऊं मध्यमाभ्यां वषट् ।
ॐ एं तं थं दं धं नं ऐं अनामिकाभ्यां हुम् ।
ॐ ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां वौषट् ।
ॐ अं यं रं लं वं शं षं सं हं लं क्षं अः करतलकरपृष्ठाभ्यां फट् ।

एवमेव हृदयादि न्यासं विधाय, ध्यायेत् । ध्यानं यथा—

॥ अन्तर्मातृकाध्यानम् ॥

**आधारे लिङ्गनाभौ प्रकटितहृदये तालुमूले ललाटे ।**
**द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्धे चतुष्टे ॥**
**वासान्ते बालमध्ये डफकठसहिते कण्ठदेशे स्वराणाम् ।**
**हं क्षं तत्त्वार्थमुक्तं सकलदलगतं वर्णरूपं नमामि ॥**

ततः,

ॐ अं नमः ॐ आं नमः ॐ इं नमः ॐ ईं नमः ।
ॐ उं नमः ॐ ऊं नमः ॐ ऋं नमः ॐ ॠं नमः ।
ॐ ऌं नमः ॐ ॡं नमः ॐ एं नमः ॐ ऐं नमः ।
ॐ ओं नम ॐ औं नमः ॐ अं नमः ॐ अः नमः ।

इति कण्ठे ।

ॐ कं नमः इत्यादि ॐ फं नमः इत्यन्तान् नाभौ ।
ॐ बं नमः इत्यादि ॐ लं नमः इति स्वाधिष्ठाने ।

ॐ वं नमः इत्यादि ॐ सं नमः इति लिङ्गमूले।
ॐ हं नमः ॐ क्षं नमः इत्याज्ञाचक्रे भ्रूमध्ये न्यसेत्।

।। इत्यन्तर्मातृकान्यासः ।।

।। अथसृष्ट्यादिबहिर्मातृकान्यासः ।।

**ॐ अस्य श्री सृष्टिमातृकान्यासस्य ब्रह्माऋषिः, गायत्रीछन्दः, सृष्टिमातृका देवता, हलोबीजानि, स्वराः शक्तयः, अव्यक्तं कीलकं, सृष्ट्यर्थे न्यासे विनियोगः।**

ततोऽन्तर्मातृकावत् ऋष्यादिकं न्यस्य, ध्यायेद्यथा—

**ध्यायेत्तां भावरूपां सकललिपिमयीं लोचनाम्भोजयुग्माम्।**
**शुक्लालङ्कारभूषां शशिमुकुटजटाजूटयुक्तां प्रसन्नाम्।।**
**विद्यामुद्राख्याकुम्भान् वरमपिदधतीं शुक्लपट्टोत्तरीयाम्।**
**वाग्देवीं पञ्चवक्त्रां कुचभरनमितां चिन्तयेत्साधकेन्द्रः।।**

एवं ध्यात्वा, अकारादिक्षकारान्तान्न्यसेद्यथा—

ॐ अं नमो ललाटे। अनामामध्यमाभ्याम्।
ॐ आं नमो दक्षनेत्रे।
ॐ इं नमो वामनेत्रे। वृद्धानामाभ्याम्।
ॐ उं नमः दक्षकर्णे।
ॐ ऊं नमः वामकर्णे। अङ्गुष्ठेन।
ॐ ऋं नमः वामनासापुटे।
ॐ ॠं नमः दक्षनासापुटे। कनिष्ठाङ्गुष्ठाभ्याम्।
ॐ ऌं नमः वामगण्डे।
ॐ ॡं नमः दक्षगण्डे। त्रिभिस्तर्जनीमध्यानामाभिः।
ॐ एं नमः ओष्ठे।
ॐ ऐं नमः अधरे। मध्यमया।
ॐ ओं नमः ऊर्ध्वदन्तपंक्तौ।
ॐ औं नमः अधोदन्तपंक्तौ। अनामया।

ॐ अं नमः शिरसि । मध्यमया ।

ॐ अः नमः मुखाभ्यन्तरे । अनामामध्यमाभ्याम् ।

ॐ कं नमः ॐ खं नमः ॐ गं नमः ॐ घं नमः ॐ ङं नमो

दक्षबाहुमूलकूर्परमणिबन्धाङ्गुलिमूलाङ्गुल्यग्रेषु । एवमेव—

ॐ चं नमो वामबाहुमूले । ॐ छं नमः कूर्परे ।
ॐ जं नमः मणिबन्धे । ॐ झं नमः अङ्गुलिमूले ।
ॐ ञं नमः अङ्गुल्यग्रे । ॐ टं नमः दक्षोरुमूले ।
ॐ ठं नमः दक्षजानुनि । ॐ डं नमः गुल्फे ।
ॐ ढं नमः अङ्गुलिमूले । ॐ णं नमः अङ्गुल्यग्रे ।
ॐ तं नमः वामोरुमूले । ॐ थं नमः वामजानुनि ।
ॐ दं नमः गुल्फे । ॐ धं नमः अङ्गुलिमूले ।
ॐ नं नमः अङ्गुल्यग्रे । ॐ पं नमः दक्षपार्श्वे ।
ॐ फं नमः वामपार्श्वे । ॐ बं नमः पृष्ठे ।

अत्र कादिबान्तान् कनिष्ठानामामध्यमाभिर्न्यसेत् ।

ततः,

ॐ भं नमो नाभौ । साङ्गुष्ठाभिस्ताभिः ।
ॐ मं नमो जठरे । पञ्चाङ्गुलीभिः ।
ॐ यं त्वगात्मने नमो हृदि ।
ॐ रं असृगात्मने नमो दक्षांसे ।
ॐ लं मांसात्मने नमः ककुदि ।
ॐ वं मेदात्मने नमः वामांसे ।
ॐ शं अस्थ्यात्मने नमः हृदादिदक्षहस्ताङ्गुल्यन्तम् ।
ॐ षं मज्जात्मने नमः हृदादिवामहस्ताङ्गुल्यन्तम् ।
ॐ सं शुक्रात्मने नमः हृदादिदक्षपादाङ्गुल्यग्रान्तम् ।
ॐ हं प्राणात्मने नमः हृदादिवामपादाङ्गुल्यग्रान्तम् ।
ॐ लं जीवात्मने नमः पादादिनाभ्यन्तम् ।

अत्र पादयोक्षान्ताः करतले न्यसनीयाः ।

।। इतिसृष्टिमातृकान्यासः ।।

।। अथस्थितिमातृकान्यासः ।।

ॐ अस्य श्रीस्थितिमातृकान्यासस्य विष्णुः ऋषिः, गायत्रीछन्दः, स्थिति-मातृकासरस्वती देवता, वादिक्षान्तानि बीजानि, स्वराः शक्तयः, कादि मान्तानि कीलकं, स्वदेहस्थित्यर्थे न्यासे विनियोगः ।

तत्र ऋष्यादिकं पूर्ववन्न्यस्य ध्यायेद्यथा—

पक्षीन्द्रासनसंस्थितां भगवतीं श्यामां पिशङ्गावृताम् ।
शङ्खं चक्रगदाब्जपाशमसृणीं मालां दधानां पराम् ।।
विद्याभीतिवरप्रदां त्रिनयनामापीनतुङ्गस्तनीम् ।
देवीं विष्णुमयीं समस्तजननीं ध्यायामि तामम्बिकाम् ।।

इतिध्यात्वा, डादिठान्तान् पञ्चाशद्वर्णान् पूर्वरीत्या पूर्वोक्त तत्तस्थानेषु न्यसेत् ।

।। इतिस्थितिमातृकान्यासः ।।

।। अथसंहारमातृकान्यासः ।।

ॐ अस्य श्रीसंहारमातृकान्यासस्य कालरुद्रऋषिर्गायत्रीछन्दः, संहार-मातृकासरस्वती देवता, मादिकान्तानि बीजानि, विलोमस्वराः शक्तयः क्षादयो यान्तानि कीलकं, आधिभौतिकाध्यात्मिकाधिदैविकपापक्षयार्थे न्यासे विनियोगः ।

पूर्ववत् ऋष्यादिकं विन्यस्य ध्यायेत् । यथा—

धूम्राङ्गीं मुक्तकेशीं मसिमलिनमुखीं घोररूपां त्रिनेत्राम् ।
व्यस्तैर्हस्तैर्दधानां व्यजनकरधृतां दीप्तमग्नितृणाढ्याम् ।।
हाहाकाराट्टहासामभयवरकरां ज्वालयन्तीं दिशश्च ।
भक्तेभ्यः प्रेमबद्धां दिशतु प्रतिदिनं भारतीं तां नमामि ।।

इति ध्यात्वा, **क्षा**दि **अ**कारान्तान् विलोमक्रमेण पूर्वोक्त तत्तद्वर्णस्थानेषु पूर्वोक्तरीत्या न्यसेत् ।

॥ इतिसंहारमातृकान्यासः ॥

इयं मातृका **प्रणव** संपुटा, **प्रणवा**दि **नमो**न्ता वा, **मायालक्ष्मीकाम**-वीजेष्वन्यतरबीजपूर्वाविसृष्टौ स्वर्गान्विता, पूर्वोक्तमातृकामुद्राभिर्मनसा वा, पुष्पेण, **तत्त्व**मुद्रया वा न्यस्तव्या । अन्योऽविशेषो बोध्यः ।

सन्यासिभिर्वनस्थैश्च वैराग्ययुग् गृहस्थैरपि च संहारान्तः, साधारण-गृहस्थैः स्थितयन्तो ब्रह्मचारिणा च सृष्ट्यन्तो न्यासः कर्तव्यः ।

॥ इतिवर्णमातृकान्यासः ॥

॥ अथश्रीकण्ठादिन्यासः ॥

एतेष्वेव स्थानेषु एताभिरेव मुद्राभिः श्रीकण्ठादिन्यसेत् न्यासमन्त्राः यथा—

*अं श्रीकण्ठेशपूर्णोदरीभ्यां नमः ।*

*आं अनन्तेशविरजाभ्यां नमः ।*

*इं सूक्ष्मेशशाल्मलीभ्यां नमः ।*

*ईं त्रिमूर्तीशलोलाक्षीभ्यां नमः ।*

*उं अमरेशवर्तुलाक्षीभ्यां नमः ।*

*ऊं अर्घीशदीर्घघोणाभ्यां नमः ।*

*ऋं भारभूतीशसुदीर्घमुखीभ्यां नमः ।*

*ॠं अतिथीशगोमुखीभ्यां नमः ।*

*ऌं स्थाणवीशदीर्घजिह्वाभ्यां नमः ।*

*ॡं हरेशकुण्डोदरीभ्यां नमः ।*

*एं क्रिण्वोर्ध्वकेशीभ्यां नमः ।*

*ऐं मौक्तिकेशविकृतमुखीभ्यां नमः ।*

*ओं सद्योजातेशज्वालामुखीभ्यां नमः ।*

*औं अनुग्रहेशोल्कामुखीभ्यां नमः ।*

कं क्रोधेशमहाकालीभ्यां नमः ।

खं चण्डेशसरस्वतीभ्यां नमः ।

गं पञ्चान्तकेशसर्वसिद्धिगौरीभ्यां नमः ।

घं शिवोत्तमेशत्रैलोक्यविद्याभ्यां नमः ।

ङं एकरुद्रेशमन्त्रशक्तिभ्यां नमः ।

चं कूर्मेशात्मशक्तिभ्यां नमः ।

छं एकनेत्रेशभूमातृकाभ्यां नमां ।

जं चतुराननेश लम्बोदरीभ्यां नमः ।

झं अजेशद्राविणीभ्यां नमः ।

ञं सर्वेशनागरीभ्यां नमः ।

टं सोमेशखेचरीभ्यां नमः ।

ठं लाङ्गलीशमञ्जरीभ्यां नमः ।

डं दारुकेशरूपिणीभ्यां नमः ।

ढं अर्द्धनारीशवीरिणीभ्यां नमः ।

णं उमाकान्तेशकाकोदरीभ्यां नमः ।

तं आं षष्ठीशपूतनाभ्यां नमः ।

थं दण्डीशभद्रकालीभ्यां नमः ।

दं अत्रीशयोगिनीभ्यां नमः ।

धं मीनेशशङ्खिनीभ्यां नमः ।

नं मेषेशगजिनीभ्यां नमः ।

पं लोहितेशकरालरात्रिभ्यां नमः ।

फं शिखीशकुर्दिजिनीभ्यां नमः ।

बं छलगण्डेशकपर्दिनीभ्यां नमः ।

भं द्विरण्डेशवज्रिणीभ्यां नमः ।

मं महाकालेशजयाभ्यां नमः ।

यं त्वगात्मभ्यां वालीशसुमुखेश्वरीभ्यां नमः ।
रं असृगात्मभ्यां भुजङ्गेशरेवतीभ्यां नमः ।
लं मांसात्मभ्यां पिनाकीशमाधवीभ्यां नमः ।
वं मेदात्मभ्यां खड्गीशवारुणीभ्यां नमः ।
शं अस्थ्यात्मभ्यां बकेशवायवीभ्यां नमः ।
षं मज्जात्मभ्यां श्वेतेशरक्षोविदारिणीभ्यां नमः ।
सं शुक्रात्मभ्यां भृग्वीशसहजाभ्यां नमः ।
हं बीजात्मभ्यां नकुलीशलक्ष्मीभ्यां नमः ।
लं परमात्मभ्यां शिवेशव्यापिनीभ्यां नमः ।
क्षं ज्ञानात्मभ्यां संवर्तकेशमहामायाभ्यां नमः

।। इतिश्रीकण्ठादिन्यासः ।।

।। अथषोढान्यासः ।।

तत्र पूर्ववत् केवलां मातृकां पुनर्न्यसेदित्येकः । ततस्तेष्वेव स्थानेषु ताभिरेव मुद्राभिः—

श्रीं अं श्रीं अं श्रीं अं नमः ललाटे ।
श्रीं आं श्री आं श्रीं आं नमः मुखवृत्ते ।

इत्येवं क्रमेण क्षान्तं विन्यसेत् । इति द्वितीयः । एवमेव—

क्लीं श्रीं क्लीं श्रीं क्लीं श्रीं नमो ललाटे
क्लीं श्रीं क्लीं श्रीं क्लीं श्रीं नमो मुखवृत्ते ।

इत्येवं क्रमेण क्षान्तं विन्यसेत् । इति तृतीयः ।

ह्रीं श्रीं ह्रीं श्री ह्रीं श्रीं नमो ललाटे
ह्रीं श्रीं ह्रीं श्रीं ह्रीं श्रीं नमो मुखवृत्ते ।

एवं क्रमेण तथैव च न्यसेदिति चतुर्थः ।

मूलं ह्रां ह्रां ऋं ॠं क्लूं मूलं ह्रां ह्रां ऋं ॠं क्लूं मूलं ह्रां ह्रां ऋं ॠं क्लूं मूलं ह्रां ह्रां ऋं ॠं क्लूं नमः ललाटे । मूलं ह्रां ह्रां ऋं ॠं क्लूं मूलं ह्रां ह्रां ऋं ॠं क्लूं मूलं ह्रां ह्रां ऋं ॠं क्लूं नमो मुखवृत्ते ।

एवं क्रमेण तथैव मातृकास्थानेषु न्यसेदिति पञ्चमः ।

अनुलोमाभ्यां मातृकास्थाने केवलं मूलं विन्यस्य, अष्टोत्तरं मूलेन **व्यापकं** कुर्यात् । इति **षष्ठः** ।

**।। इतिषोढान्यासः ।।**

**।। अथतत्त्वन्यासः ।।**

एवं षोढान्यासं विधाय तत्त्वन्यासं कुर्यात् ।

*क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं आत्मतत्त्वाय नमः* इति पादादिनाभिपर्यन्तं ***न्यास***मुद्रया अनादेशे सर्वत्र अनामाङ्गुष्ठाभ्यां न्यसेत् ।

*दक्षिणे कालिके विद्यातत्त्वाय नमः* नाभ्यादि हृदयपर्यन्तम् ।

*क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा शिवतत्त्वाय नमः* हृदादि शिरःपर्यन्तम् ।

**।। इतितत्त्वन्यासः ।।**

**।। अथबीजन्यासः ।।**

| | | | |
|---|---|---|---|
| *क्रीं नमः* | ब्रह्मरन्ध्रे । | *क्रीं नमः* | भ्रूयुगे । |
| *क्रीं नमः* | ललाटे । | *हूं नमः* | नाभौ । |
| *हूं नमः* | गुह्ये | *ह्रीं नमः* | मुखे । |

*ह्रीं नमः* सर्वाङ्गे ।

**।। इतिबीजन्यासः ।।**

॥ अथमन्त्रवर्णन्यासः ॥

| | | | |
|---|---|---|---|
| क्रीं नमः | शिरसि । | क्रीं नमः | नयनयोः । |
| क्रीं नमः | ललाटे । | हूं नमः | भ्रूयुगे । |
| हूं नमः | कर्णयोः । | ह्रीं नमः | गण्डयोः । |
| ह्रीं नमः | वदने । | द नमः | दन्तपङ्क्तौ । |
| क्षि नमः | जिह्वायां । | णे नमः | स्कन्धयोः । |
| का नमः | गले । | लि नमः | भुजयोः । |
| के नमः | हृदि । | क्रीं नमः | पार्श्वयोः । |
| क्रीं नमः | पृष्ठे । | क्रीं नमः | नाभौ । |
| हूं नमः | लिङ्गे । | हूं नमः | कट्योः । |
| ह्रीं नमः | गुह्ये । | ह्रीं नमः | करयोः । |
| स्वा नमः | पादयोः । | हा नमः | सर्वाङ्गे । |

ततो नवधा सप्तधा पञ्चधा वा मूलमुच्चरन् व्यस्तहस्ताभ्यां व्यापकन्यासं कुर्यात् ।

**ततः स्त्रीवेषधारी स्यात् सिन्दूरान्तभालकः ।**
**शृङ्गारोज्ज्वलवेषाढ्यस्ताम्बूलपूरिताननः ॥**

॥ इतिमन्त्रवर्णन्यासः ॥

॥ अथपीठन्यासः ॥

*आधारशक्तये, प्रकृत्यै, कूर्माय, अनन्ताय, पृथिव्यै, सुधाम्बुधये, मणिद्वीपाय, चिन्तामणिगृहाय, श्मशानाय, मणिपीठाय नमः* इत्येतावद् हृदि न्यसेत् ।

चतुर्दिक्षु—

नानामुनिभ्यो नमः ।

नानादेवेभ्यो नमः ।

शवेभ्यो शवमुण्डेभ्यो नमः ।

बहुमांसास्थिमोदमानशिवापारिजाताय तन्मूले रत्नवेदिकाय गणेभ्यो नमः । इति ।

अङ्गेषु—

| | |
|---|---|
| धर्माय नमो | दक्षांसे । |
| ज्ञानाय नमो | वामांसे । |
| वैराग्याय नमो | वामोरौ । |
| ऐश्वर्याय नमो | दक्षोरौ । |
| अधर्माय नमो | मुखे । |
| अज्ञानाय नमो | वामपार्श्वे । |
| अवैराग्याय नमो | नाभौ । |
| अनैश्वर्याय नमो | दक्षपार्श्वे । |

ततो—

आनन्दकन्दायै नमः । संविन्नालायै नमः । सर्वतत्त्वात्मकपद्माय नमः । प्रकृतिमयपत्रेभ्यो नमः । विकारमयकेसरेभ्यो नमः । पञ्चाशद्वर्णाढ्य कर्णिकायै नमः । आं द्वादशकलात्मने सूर्यमण्डलाय नमः । ओं षोडशकलात्मने सोममण्डलाय नमः । मं दशकलात्मने बह्निमण्डलाय नमः । सं सत्त्वाय नमः । रं रजसे नमः । तं तमसे नमः । आं आत्मने नमः । अं अन्तरात्मने नमः । पं परमात्मने नमः । ह्रीं ज्ञानात्मने नमः । इति हृदि ।

अष्टदिक्षु—

इच्छायै नमः । ज्ञानायै नमः । क्रियायै नमः । कामिन्यै नमः । कामदायिन्यै नमः । रत्यै नमः । रतिप्रियायै नमः । आनन्दायै नमः । मध्ये—मनोन्मन्यै नमः । ऐं परायै नमः । अपरायै नमः । हसौः सदाशिव महापद्मासनायै नमः । इति ।

।। इतिपीठन्यासः ।।

पीठन्यासं कृत्वा तत्र इष्टदेवतां ध्यायेत्--

॥ अथदक्षिणकालिकाध्यानम् ॥

**करालवदनां घोरां, मुक्तकेशीं चतुर्भुजाम् ।**
**कालिकां दक्षिणां दिव्यां, मुण्डमालाविभूषिताम् ॥**
**सद्यश्छिन्नशिरः खड्ग, वामाधोर्ध्वकराम्बुजाम् ।**
**अभयं वरदं चैव, दक्षिणाधोर्ध्वपाणिकाम् ॥**
**महामेघप्रभां श्यामां, तथा चैव दिगम्बराम् ।**
**कण्ठावसक्तमुण्डालीं, गलद्रुधिरचर्चिताम् ॥**
**कर्णावतंसतां नीतं, शवयुग्मभयानकाम् ।**
**घोरदंष्ट्राकरालास्यां, पीनोन्नतपयोधराम् ॥**
**शवानां करसंघातैः कृतकाञ्चीं, हसन्मुखीम् ।**
**सृक्वद्वयगलद्रक्तधारां, विस्फुरिताननाम् ॥**
**घोररूपां महारौद्रीं श्मशानालयवासिनीम् ।**
**दन्तुरां दक्षिणव्यापिमुक्तालम्बिकचोच्चयाम् ॥**
**शवरूपमहादेवहृदयोपरिसंस्थिताम् ।**
**शिवाभिर्घोररूपाभिश्चतुर्दिक्षु समन्विताम् ॥**
**महाकालेन च समं, विपरीतरतातुराम् ।**
**सुखप्रसन्नवदनां, स्मेराननसरोरुहाम् ॥**
**एवं संचिन्तयेत्कालीं श्मशानालयवासिनीम् ॥**

इति ध्यात्वा, मानसैरुपचारैरभ्यर्च्य, यथाशक्तिमूलं जपित्वा, समर्प्य, प्रणमेत् ।

ततो यथोक्तविधिना यन्त्रं निर्माय, पुरोवर्तिनि पीठे निधाय, पूर्ववत् पीठपूजां कुर्यात् ।

॥ अथगुह्यषोढान्यासः ॥

श्रीईश्वरउवाच—

शृणु देवि प्रवक्ष्यामि, गुह्यषोढामिमां प्रिये।
न प्रकाश्यमिदं तत्त्वं, यदीच्छेदात्मनोहितम् ॥ १ ॥
कर्पूरमातृकावर्णैः पुटितं, मातृकास्थले।
तेनैव पुटितं वर्णं, न्यसेदत्रैव पार्वति ॥ २ ॥
कूर्चबीजयुगं देवि, विन्यस्तव्यं प्रयत्नतः।
शक्तिबीजं तथा देवि, विन्यसेन्मूलमादितः ॥ ३ ॥
दक्षिणे कालिकेत्यादि, पूर्वबीजत्रयं न्यसेत्।
कूर्चबीजद्वयं देवि, लज्जाबीजद्वयं पुनः ॥ ४ ॥
विन्यस्तव्यं तथा देवि, मिलितं वह्निमायथा।
ततस्तत् सकलं न्यस्तं, व्यापकत्वेन देवते ॥ ५ ॥
द्वाविंशत्यक्षरे मन्त्रे, षोढान्यास इहोदितः।
अद्य तु सिद्धिदो लोके, तथा देवासुरेषु च ॥ ६ ॥
अवश्यं प्रत्यहं कार्यं, न पूजा न जपस्तथा।
कृतेऽपि साधकश्रेष्ठो महादेव समो भवेत् ॥ ७ ॥
इति ते कथितं किञ्चिद्रहस्यं घोरदक्षिणे।
न प्रकाश्यं कदाचित्तु, देवेषु च तथेतरे ॥ ८ ॥

॥ इतिगुह्यषोढान्यासः ॥

॥ अथान्तर्यागः ॥

अथ 'अकृत्वामानसं यागं न कुर्याद्बहिरर्चनम्' इति सत्कुमारीयात् बाह्यार्चनात् पूर्वमन्तर्यागस्यावश्यकत्वात् तदपि लिख्यते। यथा—

अथ शृगाटनिलयां कुण्डलिनीमुत्थाप्य, कुलपङ्केरुहगतं विन्दुं नीत्वा, ताभिः निःसृतं परामृतधारया मूलशृगाटगतया निमग्नस्तिष्ठेदिति **स्नानम्** ।

मूलविद्यास्वरूपिणीं, तडित्कोटिप्रभां, मृणालतन्तुनिभां कुण्डलिनीं, परविन्दुं प्रापयेदिति कुलाकुलसरसि भावेन संध्यां कुर्यात् । **इति संध्या** ।

**अथ तर्पणम्** ।। मूलाधारात् सोमसूर्याग्निरूपिणीं कुण्डलिनीं समुत्थाप्य, परविन्दुं प्राययेत् । तत्र चन्द्रार्कानलसंघट्टाद्गलितदिव्यामृतेन परदेवतां **तर्पयेत्** ।

अथन्यासः । अङ्गस्थितान्तश्चक्रमातृकावलोकनं न्यासः । सच आधारे लिङ्गनाभौ हृदयशिरसीत्यादि ध्यानोक्त एव ।

**अथषडङ्गवासना** । यथा—

इज्यमानो हृदात्मानं, हृदये स्याच्चिदात्मकः ।
क्रियते तत् परत्वेन, हृन्मन्त्रेण ततः परम् ।।
सर्वज्ञादिगुणोत्तुङ्गे संविद्रूपे चिदात्मनि ।
क्रियते विषयाहारः शिरोमन्त्रेण देशिकैः ।।
हृच्छिरोरूपविद्धा नियता भावना दृढा ।
क्रियते निजदेवस्य शिखामन्त्रेण देशिकैः ।।
मन्त्रात्मकस्य देवस्य, मन्त्रवाच्येन तेजसा ।
सर्वतोऽर्चन मन्त्रेण, क्रियते हृव्यसंवृतिः ।।
यद्ददाति परं ज्ञानं, संविद्रूपे परात्मनि ।
हृदयादिमयं तेजः, स्यादेवं नेत्रसंज्ञितः ।।
आध्यात्मिकादिरूपं सत्साधकस्य विनाशयेत् ।
अविद्या जातमस्त्रं तत्परं धाम समीरितम् ।।

**अथध्यानम्**—

शक्तिद्वयपुटान्तस्थं यन्मलद्वयसंस्थितम् ।
ज्योतिर्तत्त्वमयं ध्यायेत् कुलाकुलनियोजनात् ।।

**शृगाटद्वयमध्यस्थं शक्तिद्वयपुटीकृतम् ।**
**सदा समरसं ध्येयं ध्यानमेतद्वियोगिनाम् ।।**

।। इतिध्यानम् ।।

अथान्तर्मुखेन मनसा वियदादि सर्वं परतेजसि समर्पयेत् । **इतिपूजनम् ।**

जपो यथा— सुषुम्णान्तानि चिच्छक्तिरूपग्रथितसूत्रग्रन्थितां **हंस** मेरु समन्वितां अनुलोम विलोमेन कुण्डलिनीमुत्थाप्य जपेदिति **जपप्रकारः ।**

**अथहोमः** । यथा—नाभिकुण्डे कुण्डलिनीचिदग्नौ वासनेन्धनदीप्तायां परामृतविषं सुषुम्णास्रुचा अक्षवृत्तिर्वक्ष्यमाणमन्त्रैर्जुहुयात् । यथा,— **मूलमुच्चार्य,**

**नाभिचैतन्यरूपाग्नौ हविषा मनसा स्रुचा ।**
**ज्ञानप्रदीपिते नित्यमक्षवृत्तिर्जुहोम्यहम् ।।**

इत्येकाहुतिं हुत्वा, पुनर्मूलमुच्चार्य—

**धर्माधर्म हविर्दीप्तरूपाग्नौ मनसा स्रुचा ।**
**सुषुम्णावर्त्मना नित्यमक्षवृत्तिर्जुहोम्यहम् ।। स्वाहा ।**

इति द्वितीयाहुतिमन्त्रः ।

**पुनर्मूलं, प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचा ।**
**धर्माधर्मकलास्नेहपूर्णमग्नौ जुहोम्यहम् ।। स्वाहा ।**

**अन्तर्निरन्तर निरेन्धनमेधमाने,**
**मायान्धकारपरिपन्थिनि संविदग्नौ ।**
**कस्मिंश्चिदद्भुतमरीचिविकाशभूमौ,**
**विश्वं जुहोमि वसुधां दिशि वावसानम् ।।**

इत्यन्योन्यं जुहुयात् ।

**तारातन्त्रे** प्रकारान्तरेण मानसार्चनमुक्तं तच्च प्रातः कृत्ये लिखितमेव। उभयोरन्यतरं विधाय बाह्यमारभेत्।

॥ इत्यन्तर्यागः ॥

## ॥ अथबाह्यार्चनम् ॥

॥ अथाधारपूजा द्रव्यशोधनञ्च ॥

तत्रादौ हेतुं शोधयेद्यथा—स्ववामे देवतायाः दक्षिणे रक्तचन्दनादिना **बिन्दुषट्कोणवृत्तभूपुरात्मकं** यन्त्रमुल्लिख्य, सामान्यार्घ्यजलेनाभ्युक्ष्य, तत्र *आधारशक्तये नमः* इति गन्धपुष्पाभ्यां सम्पूज्य, तदुपरि '***नमः*** इति प्रक्षालितं षट्पदं त्रिपदं वृत्तरूपं वा आधारं संस्थाप्य, *दशकलात्मने वह्निमण्डलाय नमः*। इत्याधारं पूजयित्वा **फडिति** प्रक्षालितं,

॥ कलशप्रमाणम् ॥

स्वर्णरौप्यशिलाकपालमृण्मयनारिकेलशङ्खशुक्तिमुक्तापुष्पवृक्षादिनिर्मितं ताम्रकांस्यलोहविवर्जितं केवलं लौहविवर्जितमेव वा षट्त्रिंशदङ्गुलायामं, षोडशाङ्गुलमुच्चकं, चतुरङ्गुलिपरिमितं कण्ठं, षडङ्गुलमुखं, रक्त-वस्त्रादिभूषितं कलशं पूर्वपूजिताधारे ***नमः*** इति स्थाप्य,

॥ कारणपूरणम् ॥

*अं अर्कमण्डलाय द्वादशकलात्मने नमः* इति कलशे सम्पूज्य, मूलमन्त्र-मनुलोमविलोममातृकां चोच्चरन् कारणेन सम्पूर्य, *वं षोडश कलात्मने सोमण्डलाय नमः*। इति कारणोपरि पूज्येष्टदेवबुध्या आदौ पञ्चबाणान् नियोज्य, **चतुरस्त्रादि** पञ्चमुद्राभिः प्रणमेत्।

॥ चतुरस्त्रादिमुद्रालक्षणम् ॥

भूमौ करतलद्वयं दत्त्वा ***नमः ह्रीं*** इति प्रणमेदियं **चतुरस्त्राख्या** मुद्रा।

तथा भूमौ पुटाकारकरतलौ दत्त्वा हुं *नमः* इयं **संवृत्ताख्या**—मुद्रा।

भूमौ पुटाञ्जलिना ***क्लीं नमः*** इति **सम्पुटाञ्जल्याख्यामुद्रा**।

तथा भूमौ कनिष्ठाद्वयमूले वृद्धाङ्गुलिकाञ्जलिना ***ब्लूं नम*** इयं **सम्पुटाञ्जलिमुद्रा**।

भूमौ **योनिमुद्रां** बध्वा ***मं नम*** इयं **योन्यख्यामुद्रा**।

**॥ पथिकदेवेभ्योबलिविधानम् ॥**

ततः कलशसमीपे रक्तचन्दन कुङ्कुमसिन्दूराद्यन्यतमेन बिन्दुत्रिकोणवृत्त-भूबिम्बरूपं यन्त्रं विलिख्य तत्र *सर्वपथिकदेवेभ्यो नमः* इतीष्ट्वा तदुपरि भक्तशुद्धिमीनान्वितं बलिं निधाय, *ह्रीं श्रीं सर्वपथिकदेवेभ्यो नमः* इति बलिमुत्सृज्य, बलिं वामहस्तेनोत्तोल्य, द्रव्योपरि त्रिधा परिभ्राम्य, मूलमुच्चरन् पूजाबाह्ये निक्षिपेत्। ततः कुम्भं धूपितं कृत्वा, पञ्चीकरण-मारभेद्यथा—

**॥ अथपञ्चीकरणम् ॥**

***फडिति*** दर्भैः संताड्य, ***हुमिति*** वाममुष्टिनिःसृताधोमुखतर्जन्या संवेष्ट्य, मूलेन संवीक्ष्य, ***नम*** इति जलेनाभ्युक्ष्य, मूलमुच्चरन् वहन्नासिकया त्रिर्गन्धं गृह्णीयादिति पञ्चीकरणम् कृत्वा, *ॐ* इति कुम्भे पुष्पं दत्त्वा, मूलेन त्रिशचन्दनं निक्षिप्य, द्रव्यमध्ये त्रिकोणमुल्लिख्य, तत्र दक्षावर्तेन ***आदि कादि थादि*** इत्यष्टचत्वारिंशद्वर्णान् त्रिकोणस्य दक्षिणोर्ध्व-वामरेखासु ***हं लं क्ष***मिति त्रिषु कोणेषु, मध्ये ***ह्सौः*** इति च विलिख्य, ***ह्सौः स्हौः नमः*** इति त्रिरिष्ट्वा, *ॐ वं वामदेवाय वौषट्* इति वामदेवं त्रिर्जपेत्।

**॥ दीपनीविद्या ॥**

*ॐ हुं पशुपतये अस्त्रायफट्*, इति पशुपतिमिष्ट्वा;

*ह्रीं क्रों वामलोचने परमस्वामिनि परमाकाशशून्यवाहिनि चन्द्रसूर्याग्निभक्षिणि पात्रे विश विश स्वाहा*। इति दीपनी विद्यां द्रव्योपरि दशधा संजप्य,

॥ अथानन्दगायत्री ॥

*ऐं ह्रीं श्रीं आनन्देश्वराय विद्महे सुधादेव्यै धीमहि तन्नोऽर्ध नारीश्वरः प्रचोदयात्* । इति आनन्दगायत्रीं दशधा त्रिधा वा जपेत् ।

ततः,

*हंस शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्* । इति ऋचा त्रिरभिमन्त्र्य, शापविमोचनं कुर्याद्यथा—

॥ अथब्रह्मशापविमोचनम् ॥

*वां वीं वूं वैं वौं वः ब्रह्मशाप विमोचितायै सुधादेव्यै नमः* । इति ब्रह्मशापविमोचनं कलशोपरि दशधा पठित्वा,

॥ अथकृष्णशापविमोचनम् ॥

*ह्रीं श्रीं क्रां क्रीं क्रूं क्रैं क्रौं क्रः सुधे कृष्णशापं विमोचय अमृतं स्रावय स्रावय स्वाहा* । इति कृष्णशापविमोचनेन दशधाभिमन्त्र्य,

॥ अथशुक्रशापविमोचनम् ॥

*ॐ शां शीं शूं शैं शौं शः सुरे शुक्रशापविमोचयामृतं स्रावय स्रावय स्वाहा* । इति शुक्रशाप विमोचनं तदुपरि त्रिः पठित्वा,

॥ द्रव्याभिमन्त्रणम् ॥

**ॐ एकमेव परं ब्रह्म स्थूल सूक्ष्म वरं ध्रुवम् ।**
**कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यह ॥**
**सूर्यमण्डलसम्भूतां वरुणालयसंभवे ।**
**अमाबीजमये देवि शुक्रशापाद्विमुच्यताम् ॥**
**वेदानां प्रणवो बीजं ब्रह्मानन्दमयं यदि ।**
**तेन सत्येन ते देवि ब्रह्महत्यां व्यपोहतु ॥**

इति मन्त्रत्रयेण च त्रिभिरभिमन्त्र्य,

॥ तीर्थावाहनम् ॥

*ॐ गङ्गे चेति* **क्रौंमित्यङ्कुबीजेन** अङ्कुशमुद्रया सूर्यमण्डलात्तीर्थान्यावाह्य,

॥ अथक्षुरिकाजपः ॥

द्रव्योपरि क्षुरिकां त्रिर्जपेद्यथा—

*ह्रीं श्रीं क्षां क्षीं क्षुरिके रतिशोभिनि विकारानस्य द्रव्यस्य हर हर स्वाहा* । इति क्षुरिका मन्त्रः ।

॥ अथप्रकाशिनीमन्त्रः ॥

ततः, *ह्रीं श्रीं ऐं अमृते अमृतोद्भवे अमृतवर्षिणि महाप्रकाशयुक्ते स्वाहा* । इति प्रकाशिनीं त्रिस्संजप्य,

॥ अथतिरस्करिणीविधिः ॥

तिरस्करिणीं ध्यायेद्यथा—

**नीलं हयं समधिरुह्य पुरः प्रयान्तीम् ।**
**नीलांशुकाभरणमाल्यविभूषिताङ्गीम् ॥**
**निद्रापुटेन भुवनानि तिरोदधाना ।**
**खड्गायुता भगवती परिपातु भक्तान् ॥**

इति ध्यात्वा, *ह्रीं क्लीं ऐं ग्लौं तिरस्करिणि वाग्वादिनि सकलपशुवाङ्मनश्चक्षुः श्रोत्रजिह्वाघ्राणोक्ति तिरस्करणं कुरु कुरु ठः ठः स्वाहा* । इति तिरस्करिणीं त्रिधा संजप्य,

॥ अथपवमानमन्त्रविधिः ॥

*ॐ पवमानः परानन्दः पवमानः परोरसः । पवमानं परं ज्ञानं तेन त्वां पावयाम्यहम्* । इति पवमानमन्त्रं त्रिःपठेत् ।

ततो ***यमिति*** वायुबीजेन संशोष्य, ***रमिति*** वह्निबीजेन संदह्य, ***वमित्यमृत***बीजेनामृतीकृत्य ***ह्रीं हंसः*** इति सूर्यमन्त्रेणोर्ध्वं सूर्यमण्डलं विचिन्त्य मस्तकोपरि ***हसौः*** इति वरुणमन्त्रं ध्यात्वा तस्मात्पतन्त्या अमाममयीधारया ***वं सं*** इति जपन्, **धेनुमुद्रां** बध्वा, कुम्भं पूर्णं विभाव्य, **कूर्ममुद्रां** बध्वा,

॥ अमृतीकरणम् ॥

*ह्रीं श्रीं अं आं इं अमृते अमृतोद्भवे अमृतवर्षिणि अमृतं स्रावय स्रावय आं उं सं सं अमृतं अमृतेश्वर्यै नमः।* इत्यमृतं द्रव्योपरि सप्तधा संजप्य कर्पूरादिभिः सुवासयेत्।

ततः *ॐ विद्यातत्त्वाय स्वाहा।* इति पठित्वा योनि मुद्रां प्रदर्श्य आनन्दभैरवानन्दभैरव्यौ द्रव्यमध्ये विभावयेद्यथा—

॥ अथानन्दभैरवध्यानम् ॥

**सूर्यकोटि प्रतीकाशं चन्द्रकोटि सुशीतलम्।**
**अष्टादशभुजं देवं पञ्चवक्त्रं त्रिलोचनम्॥**
**अमृतार्णवमध्यस्थं ब्रह्मपद्मोपरिस्थितम्।**
**वृषारूढं नीलकण्ठं सर्वाभरणभूषितम्॥**
**कपालखट्वाङ्गधरं घण्टां डमरुवादिनम्।**
**पाशङ्कुशधरं देवं गदामुशलधारिणम्॥**
**खड्गखेटकपट्टीशं मुद्गरं शूलदण्डधृक्।**
**बिभ्रतं खेटकं मुण्डं वरदाभयपाणिनम्॥**
**लोहितं देवदेवेशं भावयेत्साधकाग्रणीः॥**

इत्यानन्दभैरवं ध्यात्वा,

॥ अथानन्दभैरवमन्त्रः ॥

*हसक्षमलवरयूं आनन्दभैरवाय वषट्।* इत्यानन्दभैरवं त्रिःपूजयेत् ततः,

॥ अथानन्दभैरवीध्यानम् ॥

**भावयेच्च सुधां देवी चन्द्रकोटियुतप्रभाम्।**
**हिमकुन्देन्दुधवलां पञ्चवक्त्रां त्रिलोचनाम्॥**
**अष्टादशभुजैर्युक्तां सर्वानन्दकरोद्यताम्।**
**प्रहसन्तीं विशालाक्षीं देवदेवस्य सन्मुखीम्॥**

एवं ध्यात्वा,

॥ अथानन्दभैरवीमन्त्रः ॥

*हसत्क्षमलवरयीं आनन्दभैरव्यै वौषट्* । इत्यानन्दभैरवीं त्रिःपूजयेत् । ततो मूलाधारे त्रिकोणे कुण्डलिनीं ध्यात्वा, सुषुम्णान्तर्गतब्रह्मपथेन ब्रह्मरन्ध्रस्थपरशिवेन समानीय, ***हंसः सोऽहं*** इति मन्त्रेण तयोरैक्यं विभाव्य, तद्भवामृतं वहन्नासापुटपथेन कुम्भे समायोज्य, अमृतमयं द्रव्यं विभाव्य, षडङ्गमन्त्रेण सकलीकृत्य, **धेनुयोनिमुद्रे** प्रदर्श्य, ***वमि***त्यष्टधा संजप्य कुम्भं पूजयेदिति द्रव्यशोधनम् ।

॥ इतिहेतुशुद्धिः ॥

॥ अथशुद्ध्यादिशोधनम् ॥

ततः शुद्धिमीनमुद्राकुण्डगोलादिकमानीय, पृथक्-पृथक् पात्रेषु संस्थाप्य-शोधयेद्यथा—

॥ अथशुद्धिशोधनम् ॥

तत्रादौ ***यमि***ति वायुबीजेन शुद्धिं संशोष्य, ***रमि***ति वह्निबीजेन संदह्य, ***वमि***ति वरुणवीजेन धेनुमुद्रयामृतीकृत्य, **हुं** इत्यवगुण्ठ्य, **फट्** इत्यभ्युक्ष्य, मूलमुच्चरन् सुधादृष्ट्यावलोकयेदिति षड्विधसंस्कारानन्तरम्,

*ॐ प्रतद्विष्णुस्तवति वीर्येण । मृगो न भीमः कुचरो गिरिष्ठाः ।*
*यस्योरुषु त्रिषु विक्रमेणेवाधिक्षियन्ति भुवनानि विश्वा ॥*

इति वैदिकमन्त्रेण शुद्धिमभिमन्त्र्य, षडङ्गेन सकलीकृत्य, **योन्या**सन्दीप्य, तालत्रयं छोटिकाभिर्दिग्बन्धनं विधाय **मत्स्य**मुद्रयाच्छाद्य, तदुपरि मूलं, सप्तधा जपेत् ।

॥ इतिशुद्धिशोधनम् ॥

॥ अथमीनशोधनम् ॥

ततो मीनं पूर्ववत् संशोषणादिषट्संस्कारैस्संस्कृत्य,

*ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।*
*उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीय मामृतात् ॥*

इति ब्रह्मर्चा तमभिमन्त्र्य, षडङ्गादि मूलाभिमन्त्रणान्तं कुर्यात् ।

॥ इतिमीनशोधनम् ॥

॥ अथमुद्राशोधनम् ॥

ततः,

ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ।
तद्विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत् परमं पदम् ॥

इति मन्त्रेण मुद्रामभिमन्त्रयेदन्यत्सर्वं शुद्धिवत् ।

॥ इतिमुद्राशोधनम् ॥

॥ अथकुण्डगोलादिशोधनम् ॥

ततः कुलकुसुमे संशोषणादिकं कृत्वा,

ॐ विष्णोर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥
गर्भं ते अश्विनौ देवा वा धत्तां पुष्करस्रजौ ।
प्लूं क्लूं ज्लूं ग्लूं म्लूं स्वाहा ।
अमृते अमृतोद्भवे अमृतवर्षिणि अमृतं स्रावय स्वाहा ।

एभिर्मन्त्रैरभिमन्त्र्य, पूर्ववत् षडङ्गानि कुर्यात् ।

॥ इतिकुण्डगोलादिशोधनम् ॥

॥ अथशक्तिशोधनम् ॥

अत्र शक्तिं स्ववामे निवेश्य, पूजनादिकमाचरेदिति रहस्यम् । सा चेददीक्षिता तर्हि तां शोध्य निवेशयेत् । तत्र प्रयोगो यथा—

नटीकापालिकीवेश्याद्यन्यतमां यथा लब्धां वा स्ववामे समावेश्य; तच्छरीरे स्वकल्पोक्तन्यासान् विधाय, *बाला त्रिपुरायै नम इमां शक्तिं पवित्री कुरु मम शक्तिं कुरु स्वाहा* । इति मन्त्रं पठन् सुरया रेतसा जलेन वा तामभिषिञ्च्य, अभेदबुद्धया तच्छ्रोत्रे मूलमुच्चरेत् । *ह्रीं* इत्युच्चरेत् ।

शक्त्यभावे मातृपीठे सावर्णां देवीं ध्यात्वा पूजयित्वा च शिवोऽहमिति भावयन्, उभयोस्सङ्गमं कृत्वा पूर्ववज्जपादिकं कुर्यात् । इत्यपरः प्रकारः सम्प्रदायात् ।

।। इतिशक्तिशोधनम् ।।

**।। अथविशेषार्घ्यस्थापनम् ।।**

आत्मश्रीचक्रयोर्मध्ये **हुमितिगर्भितत्रिकोणावृतषट्कोणचतुरस्रात्मकं, गर्भितत्रिकोणषट्कोणावृतभूबिम्बात्मकं वा कुलकुसुमादिना विलिख्य, सामान्यार्घ्यजलेनाभ्युक्ष्य,**

*पुं पूर्णगिरिपीठाय नमः ।।    उं उड्डियानपीठाय नमः ।।*
*जां जालन्धरपीठाय नमः ।।*

इति चक्रस्य चतुरस्रे पूर्वादि दिक्षु सम्पूज्य, षट्कोणेषु षडङ्गानि संयोज्य, मातृकयावृतं मूलखण्डत्रयेण त्रिकोणं, त्रिकोणमध्ये—*ह्रीं आधारशक्तये नमः* इतीष्ट्वा तत्र ***नमः*** इति मन्त्रेण प्रोक्षितं त्रिपदाद्याकारमाधारं स्थाप्य, तत्र—

*यं धूमार्चिषे नमः । रं उष्मायै नमः ।*
*लं ज्वलिन्यै नमः । वं ज्वालिन्यै नमः ।*
*शं विस्फुल्लिङ्गिन्यै नमः । षं सुश्रियै नमः ।*
*सं स्वरूपायै नमः । हं कपिलायै नमः ।*
*ळं हव्यवाहायै नमः । क्षं कव्यवाहायै नमः ।*

एवं वह्नेः दशकलाः सम्पूज्य,

*मं वह्निमण्डलाय दशकलात्मने नमः ।* इति पूजयेत् ।

ततस्तत्रैवं पूजिताधारे मुक्तास्फटिककाचकाञ्चनशङ्खरजत**विश्वामित्र-कपालमहाशङ्खोद्भवताम्र**जेष्वन्यतमं यथामिलितं *झटिति* संशोधितं पात्रं संस्थाप्य, तत्र पात्रेऽनुलोमक्रमेण *कादिठान्तान्* विलोमक्रमेण *भादिडान्त*मेवं प्रत्येकत्र युग्मवर्णाः पूर्वास्तपिन्यादयो द्वादशसंख्याः रवेः कला**श्चतुर्थ्यन्तनमो**ऽन्ताः पूजयेत् ।

प्रयोगो यथा—

*कं भं तपिन्यै नमः । खं बं तापिन्यै नमः ।*

*गं फं धूम्रायै नमः । घं पं मरीच्यै नमः ।*

*ङं नं ज्वालिन्यै नमः । चं धं रुच्यै नमः ।*

*छं दं सुषुम्णायै नमः । जं थं भोगदायै नमः ।*

*झं तं विश्वायै नमः । ञं णं बोधिन्यै नमः ।*

*टं ढं धारिण्यै नमः । ठं डं क्षमायै नमः ।*

*अं अर्कमण्डलाय द्वादशकलात्मने नमः ।*

इति पूज्य, पात्रे त्रिणोणावृतषट्कोणचतुरस्रं यन्त्रं समुल्लिख्य **व्यस्तमूलत्रिखण्डेन** मातृकयावृतं षडङ्गमन्त्रैः षडङ्गानि षट्कोणेषु पूर्वोक्तपीठमन्त्रैश्चतुरस्रं सम्पूज्य *व*मिति वरुणबीजं मूलमन्त्रं अनुलोम-विलोममातृकां विलोममातृकामेव वा उच्चरन्, घटस्थ **शुद्धामृतेन** त्रिभागं पूरयेत् ।

तत्रैवं पूरिते पात्रे दूर्वाक्षतविल्वपत्ररक्तचन्दनजपापुष्पसुगन्धिपुष्पार्क-वीरापराजिताबर्बरीपुष्पाणि चन्द्रचन्दनकस्तूरीगोरोचनागुरुकुङ्कुम-**स्वयम्भूकुण्डगोलात्मकं** चाष्टगन्धं निक्षिप्य, षोडशस्वरपूर्णाः कलाबन्धो षोडशकलाः पूजयेद्यथा—

| | |
|---|---|
| अं अमृतायै नमः । | आं मानदायै नमः । |
| इं पूषायै नमः । | ईं तुष्ट्यै नमः । |
| उं पुष्ट्यै नमः । | ऊं रत्यै नमः । |
| ऋं धृत्यै नमः । | ॠं शशिन्यै नमः । |
| ऌं चन्द्रिकायै नमः । | ॡं कान्त्यै नमः । |
| एं ज्योत्स्नायै नमः । | ऐं श्रियै नमः । |
| ओं प्रीत्यै नमः । | औं अङ्गदायै नमः । |
| अं पूर्णायै नमः । | अः पूर्णामृतायै नमः । |

ॐ चन्द्रमण्डलाय षोडशकलात्मने नमः ।

इति सम्पूज्य, शक्तश्चेदेकपञ्चाशत्कला अपि पूजयेत् । तद्यथा—

| | |
|---|---|
| कं सृष्ट्यै नमः । | खं ऋद्ध्यै नमः । |
| गं स्मृत्यै नमः । | घं जरायै नमः । |
| ङं कान्त्यै नमः । | चं लक्ष्म्यै नमः । |
| छं द्युत्यै नमः । | जं स्थिरायै नमः । |
| झं स्थित्यै नमः । | ञं सिध्यै नमः । |

इति ब्रह्मकलाः सम्पूज्य, हंसः शुचिषदिति पठेत् ।

ततः,

| | |
|---|---|
| टं जरायै नमः । | ठं कपालिन्यै नमः । |
| डं शान्त्यै नमः । | ढं ऐश्वर्यै नमः । |
| णं रत्यै नमः । | तं कामिकायै नम । |
| थं वरदायै नमः । | दं ह्लादिन्यै नमः । |
| धं प्रीत्यै नमः । | नं दीर्घायै नमः । |

इति विष्णुकलाः सम्पूज्य प्रतद्विष्णुः इति मन्त्रं पठेत् ।

ततः,

पं तीक्ष्णायै नमः। फं रौद्रयै नमः।
वं भयायै नमः। भं निद्रायै नमः।
मं तन्द्रायै नमः। यं श्रुत्यै नमः।
रं क्रोधिन्यै नम। लं क्रियायै नमः।
वं उत्कारिण्यै नमः। शं मृत्यवे नमः।

इति रुद्रकलाः सम्पूज्य, त्र्यम्बकं यजामहे इति मन्त्रं पठेत्। ततः,

षं पीतायै नमः। सं श्वेतायै नमः। हं अरुणायै नमः।
लं असितायै नमः। क्षं अनन्तायै नमः।

इतीश्वरकलाः सम्पूज्य, तद्विष्णो इति मन्त्रं पठेत्।

अं निवृत्यै नमः। आं प्रतिष्ठायै नमः।
इं विद्यायै नमः। ईं शान्त्यै नमः।
उं इन्धिकायै नमः। ऊं दीपिकायै नमः।
ऋं रोचिकायै नमः। ॠं मोचिकायै नमः।
ऌं परायै नमः। ॡं सूक्ष्मायै नमः।
एं सूक्ष्मामृतायै नमः। ऐं ज्ञानामृतायै नमः।
ओं आप्यायिन्यै नमः। औं व्यापिन्यै नमः।
अं व्योमरूपायै नमः। अः अनन्तायै नमः।

इति सदाशिवकलाः सम्पूज्य, विष्णुर्योनिं कल्पयतु इति मन्त्रं पठेत्।

ततो विष्णुसूर्याग्निप्रणवकाः पूजयेदेवं चतुर्नवतिमन्त्रैस्सम्पूज्य, पूर्ववद्द्रव्यैः कुसुमेन त्रिकोणस्य त्रिषु रेखासु सन्मुखादि दक्षिणावर्तक्रमेण *अ*ादि *क*ादि *थ*ादि षोडशवर्णान् मध्ये *हलक्ष*वर्णान् सबिन्दुमुल्लिख्य, पूर्ववन्मूलखण्डत्रयेण त्रिकोणं मातृकयावृतं षडङ्गमन्त्रैः षट्कोणं पीठैश्चतुरस्रमिष्ट्वा *गङ्गे च* इत्यादिना *क्रों* इत्यङ्कुश मुद्रया

सूर्यमण्डलात्तीर्थान्यावाह्य पूर्वशोधितशुद्धिमीने मुद्राकुण्डगोलादिकं किञ्चित्तत्र निक्षिप्य,

सहक्षमलवरयूं आनन्दभैरवाय वषट् ।

सहक्षमलवरयीं आनन्दभैरव्यै वौषट् ।

इत्यानन्द भैरवभैरव्यौ तत्र सम्पूज्य, हस्तेनार्घ्यं पात्रं, धृत्वा वक्ष्यमाणैः पञ्चभिर्मन्त्रैरभिमन्त्रयेद्यथा—

ऐं क्लीं सौं ब्रह्माण्डखण्डसंभूतमशेषरससम्भवम् ।
आपूरितं महापात्रं पीयूषरसमावहम् ।
ऐं अखण्डैकरसानन्दकरे पर हर सुधात्मनि ।
स्वच्छन्दस्फुरणामन्त्रनिधेह्याकुलरूपिणी ॥
क्लीं अकुलस्थामृताकारे सिद्धिज्ञानकरे परे ।
अमृतत्वं निधेह्यस्मिन् वस्तूनि क्लीं स्वरूपिणी ।
सौं तद्रूपेणैकरस्थं च कृत्वा ह्येतत्स्वरूपिणी ।
भूत्वा परामृताकारं मयि विस्फुरणं कुरु ॥

वद वद वाग्वादिनि क्लीं क्लिन्ने क्लेदिनि क्लेदय क्लेदय महाक्षोभं कुरु सौः महाक्षोभं कुरु कुरु श्रीं हसौः स्हौः ॥

ततः,

ग्लूं गगनरत्नेभ्यो नमः । स्लूं स्वर्गरत्नेभ्यो नमः ।

इति पञ्चरत्नान्यर्घ्यस्य पूर्वादि दिक्षु यजेत् । ततो ***नमः*** इति पुनस्तत्रानन्द भैरवभैरव्यौ सम्पूज्य, त्रिकोणे पुनः ***हंस*** इति विलिख्य, तत्रेष्टदेवतामावाह्य, तालत्रयेण दिग्बन्धनं विधायाव**गुण्ठन**मुद्रयावगुण्ठ्य, **धेन्वा**मृती कृत्य, **योनि**मुद्रां प्रदर्श्य, तत्र ***हसौः॥ नमः*** इति सम्पूज्य, कल्पोक्तमुद्राश्च प्रदर्श्यार्घ्यस्याग्नीशासुरवायव्यमध्ये दिक्षु च षडङ्गेन सकलीकृत्य, **शङ्ख**मुद्रां प्रदर्श्य, **मत्स्य**मुद्रया पात्रमाच्छाद्य, तदुपरि मूलमन्त्रमष्टधा जप्त्वा, धूपैःसुधूपितं कृत्वा, दीपैरभिवन्द्य, देवीरूपमर्घ्यं भावयन्,

पुष्पाञ्जलित्रयेण यजेत् । इत्येवं स्थापितं अर्घ्यं पूजान्तं मलिनं न कारयेत् ।

॥ इतिविशेषार्घ्यस्थापनविधिः ॥

**॥ अथपात्रस्थापनकल्पविधिः ॥**

अथ श्रीदेव्याज्ञामादाय घटश्रीपात्रयोर्मध्ये घटसमीपमारभ्य विशेषार्घ्यं यावद्गुरुपात्रभैरवशक्तियोगिनीवीरबलिपाद्याचमनपात्राणीत्यष्टौ स्थापये-द्विशेषार्घ्येण नव पात्रात्मकं महाकल्पान्तेषु पाद्याचमनं विहाय सर्वात्मकं वा **महाकल्पं** कुर्यात् । अशक्तश्चेद्देवीं गुरुभैरवयोगिनीबलिपात्राणीति **मध्यमकल्पम्** । श्रीदेवीगुरुभैरवपात्राणीति तृतीयात्मकं वा **कनिष्ठकल्पं** कुर्यात् ।

तेष्वन्यतरकल्पमभिप्रेत्य, यावन्ति पात्राणि स्थाप्यत्वेनाभिमतानि भवेयुस्तावन्ति क्रमेण त्रिकोणवृत्तचतुरस्रात्मकानि मण्डलानि विलिखेत् ।

तेष्वादौ घटसमीपे यन्त्रे—

*आधार शक्तये नमः* इति सम्पूज्य, तत्र ***फट्*** प्रक्षालितं आधारं न्यस्य, तदुपरि ***फट्*** इति प्रक्षालितं पात्रं संस्थाप्य, घटस्थामृतेन ***नमः*** इति मन्त्रेण सम्पूर्य गङ्गेचेत्यादि ***क्रों***मित्यङ्कुश मुद्रया सूर्यमण्डला-त्तीर्थान्यावाह्य; ॐ इति पुष्पं मूलेन गन्धं दत्वा, **प्रणवेन** दशधाभिमन्त्र्य, **धेनु योनि** मुद्रे प्रदर्श्य, तत्र किञ्चिच्छुध्यादिकं निक्षिपेदिति **गुरुपात्रम्** ।

एवमेवान्यानि पात्राणि स्थापयेत् ।

ततोऽर्घ्याद्दक्षिणे प्रोक्षणीपात्रमधुपर्कपात्रे स्थाप्य, पूजास्थानाद्बहिः स्वपृष्ठभागे वा करप्रक्षालनार्थमेकं पात्रं स्थापयेत् ।

॥ इतिपात्रस्थापनकल्पविधिः ॥

**॥ अथतर्पणम् ॥**

श्रीपात्रात्पात्रान्तरे विन्दुं नीत्वा वामदक्षिणहस्तकृत**तत्त्वमुद्र**यैव वा शुद्धि खण्डं गृहीत्वा—

तेन पात्रान्तरस्थ कारणविन्दुमुद्धृत्य, *हसक्षमलवरयूं आनन्दभैरवं तर्पयामि नमः* इत्यनेन मूर्न्धि त्रिः संतर्प्य एवं गुरुपात्राद्बिन्दुमादाय पादुकामन्त्रमुच्चार्य, *श्रीमदमुकानन्दनाथगुरु अमुकीदेवीं वा श्रीपादुकां तर्पयामि नमः स्वाहा* । यद्वा *गुरुमन्त्रमुच्चार्यामुकानन्द* **नाथ** *गुरुं तर्पयामि नमः* इति त्रिः सकृद्वा त्रैव संतर्प्य; एवं **परमगुरुं परापरगुरुं, परमेष्टिगुरुं** तत्रैव तर्पयेत् ।

ततो भैरव पात्रामृतेन *ॐ भैरव ऋषिं तर्पयामि नमः* इति ऋषि एवं *महाकाल भैरवं तर्पयामि नमः* इति शिवं तत्रैव, *ॐ सहक्षमलवरयीं आनन्दभैरवीं तर्पयामि स्वाहा* । इति त्रिः सकृद्वा सन्तर्प्य मूलान्ते *साङ्गां सायुधां सपरिवारां सावरणां अमुकीदेवीं तर्पयामि स्वाहेति* श्रीपात्रामृतेन हृदि त्रिः संतर्प्य तत्त्वशुद्धिं कुर्याद्यथा—

**॥ इतितर्पणम् ॥**

**॥ अथ तत्त्व शुद्धिविधानम् ॥**

*ॐ प्राणापानव्यानोदानसमानाःमेशुद्ध्यन्तां*
*ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ॥*

*ॐ पृथिव्यपतेजोवाय्वाकाशानि मे शुद्ध्यन्ताम् ॥*

*ॐ प्रकृत्यहङ्कारबुद्धि मनः श्रोत्राणि मे शुद्ध्यन्तामित्यादि ॥*

*ॐ त्वक्चक्षुजिह्वाघ्राणवचांसि मे शुद्ध्यन्ताम्*

ज्योतिरिति सर्वत्रकल्पयेत् ।

*ॐ पाणिपादपायूपस्थशब्दानि मे शुद्ध्यन्ताम् ॥*

*ॐ स्पर्शरूपरसगन्धाकाशानि मे शुद्ध्यन्ताम् ॥*

*ॐ वायुस्तेजस्सलिल भूम्यात्मनो मे शुद्ध्यन्ताम्*
*ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ॥*

इति सप्तभिर्ऋग्भिः भैरवपात्रामृतेन करतलौ सम्मार्ज्य, दक्षिण हस्ततले त्रिकोणमालिख्य, कलापसदृशं शुद्धिखण्डं त्रिकोणस्य त्रिषुकोणेषु मध्ये

चैकं निधाय, वामहस्ताङ्गुष्ठमध्यमानामाभिः प्रथमं अधः कोणस्थं शुद्धिखण्डं धृत्वा, मूलमन्त्रान्ते—

*ह्रीं श्रीं शिवशक्ति सदाशिवेश्वर विद्याकलात्मने अं (अः इत्यन्तं) ऐं आत्मतत्त्वेन स्थूलदेहं शोधयामि स्वाहा। इति सन्मुखस्थं शुद्धखण्डं मुखे जुहुयात्।*

*एवं ह्रीं श्रीं मायाकला नियतिकलात्मशुद्धविद्यारागपुरुषात्मने कं खं (इत्यारभ्यपवर्गान्तं) क्लीं विद्यातत्त्वेन सूक्ष्मदेहं शोधयामि स्वाहा।* इति वामस्थां स्वीकार्या।

*ह्रीं श्रीं प्रकृत्यहङ्कारबुद्धिमनःश्रोत्रत्वक्चक्षुरसनाघ्राणपाणिपादपायूपस्थ-शब्दस्पर्शरूपरसगन्धाकाशवायुस्तेजःसलिलभूम्यात्मने यं रं लं वं शं षं सं हं लं क्षं सौः शिवतत्त्वेन परदेहं शोधयामि स्वाहे—*तिदक्षिणस्थाम्।

*ह्रीं श्रीं शिवशक्ति सदाशिवेश्वर विद्याकलात्मने मायाकलानियति-कलात्मने शुद्धविद्यारागपुरुषात्मने प्रकृत्यहङ्कारबुद्धिमनःश्रोत्रत्वक्-चक्षुरसनाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुस्ते-जःसलिलभूम्यात्मने—अं आं (अः इत्यन्तं) ऐं क्लीं सौः सर्वतत्त्वेन तत्त्वत्रयाश्रयं जीवं परिशोधयामि स्वाहेति* मध्यस्थां शुद्धिं स्वीकृत्य, व्यापकन्यासं कृत्वा, पृष्ठस्थजलेन हस्तौ परिशोधयेत्। वस्त्रेण परिशोध्य, सर्वांगं हस्ताभ्यां मार्जयेत्।

॥ इतितत्त्वशुद्धिः ॥

॥ अथविन्दुस्वीकारपद्धतिः ॥

इति तत्त्वशुद्धिं कृत्वा विन्दुस्वीकारं कुर्यात्। यथा—भैरवपात्रात् पृथक्पात्रे किञ्चिदमृतं स्थाप्य, मूलाधारात् कुण्डलिनीमाजिह्वान्तां विभाव्य तन्मयो भवेत्,

*ॐ आर्द्रं ज्वलति ज्योतिरहमस्मि। ज्योतिर्ज्वलति ब्रह्माहमस्मि। सोऽहमस्मि अहमेवाहमाजुहोमि स्वाहा॥*

इति तत्त्वमुद्रया तस्माद्बिन्दुमेकं स्वीकृत्य, तत एवं

ॐ त्वमेव प्रत्यक्षं ब्रह्मासि त्वमेव प्रत्यक्षं ब्रह्मासि त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि ऋतं वदिष्यामि सत्यं वदिष्यामि । तन्मामवतु तद्वक्तारमवतु अवतु मां अवतु वक्तारम् ।

इति पुनस्तथैव स्वीकृत्य,

यं छन्दसामृषभो विश्वरूपा छन्दोभ्यो अध्यमृता संबभूव । स मेन्द्रो मेधया स्पृशतु । अमृतस्य देवधारणो भूयासम् । शरीर मे चर्षणं जिह्वा मे मधुमत्तमाकर्णाभ्यां भूरिव श्रुतं ब्रह्मणा कापोऽसि मेधया पिहितः श्रुतं मे गोपाय स्वाहा । आवहन्तो वितन्वाना पूर्वा चिरमात्मनो वासांसि मम गावत् । स अनुपाने च सर्वथा तातो मे श्रियमावह लोमशं पशुभिः स्वाहा ।

इति पुनस्तृतीयविन्दुं स्वीकुर्यात् ।

ततः श्रीपात्रामृतेन गायत्र्या मूलेन च पूजोपकरणमभ्युक्ष्य सर्वं ब्रह्ममयं भावयेत् ।

।। इतिविन्दुस्वीकारपद्धतिः ।।

।। अथवटुकबलिदानम् ।।

ततो वटुकादिबलिदानं यथा—

सिंहासनस्य चतुर्दिक्षु तत्कोणेषु वा यथा सम्प्रदायं त्रिकोणवृत्तमण्डलानि विलिख्य, स्ववामेऽप्येकं त्रिकोणवृत्तचतुरस्रं यन्त्रं कृत्वा, ऐं ह्रीं मण्डलाय नमः इति सिंहासनस्य पूर्वादिस्थमण्डलचतुष्टयं सम्पूज्य, ह्रीं क्रीं व्यापक मण्डलाय नमः इति वामस्थं मण्डलमिष्ट्वा,

पूर्व मण्डले वां वटुकाय नमः ।।
दक्षिणे यां योगिनीभ्यो नमः ।।
पश्चिमे क्षां क्षेत्रपालाय नमः ।।
उत्तरे गां गणपतये नमः ।।

इति संपूजयेत् ।

ततोऽर्द्धान्नसलिलशुद्धिमीनरक्तपुष्पान्वितं बलिमुपस्कृत्य, तत्तन्मण्डले पृथक् पृथक् संस्थाप्य, वाममण्डले—*ॐ सर्वभूतेभ्यो नमः* इति सम्पूजयेत् । क्रमेणोत्सृजेत् । प्रयोगो यथा :—

**रक्ताम्बरं कपिलपिङ्गजटाकलापम् ।**
**ज्वालावली कुटिलचन्द्रधरं प्रचण्डम् ।**
**बालार्कधातुकनकाचलसुन्दराङ्गम् ।**
**देवीसुतं वटुकनाथमहं स्मरामि ।।**

इति ध्यात्वा,

*एहि एहि देवीपुत्र वटुकनाथ कपिलजटाभारभासुर त्रिनेत्र ज्वालामुख सर्वविघ्नान् नाशय-नाशय सर्वोपचारसहितं बलिं गृह्ण-गृह्ण स्वाहा । एष बलिर्वटुकाय नमः ।*

इति वामहस्तेन तत्त्वमुद्रया बलिपात्रामृतेनोत्सृज्य,

**ॐ बलिदानेन संतुष्टो, वटुकः सर्वसिद्धिदः ।**
**शान्तिं करोतु मे नित्यं, भूतवेतालसेवितः ।।**

इति पुष्पाञ्जलिं दत्त्वा, नमस्कुर्यात्,

।। इतिवटुकबलिः ।।

।। अथयोगिनीबलिः ।।

दक्षिणे—

**ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले वा ।**
**पाताले वा वने वा सलिलपवनयोर्यत्रकुत्र स्थिता वा ।।**
**क्षेत्रे पीठोपपीठादिषु च कृतपदाधूपदीपादिमांसैः ।**
**प्रीता देव्याः सदा नः शुभबलिविधिना पातु वीरेन्द्रवन्द्याः ।।**

इति ध्यात्वा,

यां योगिनीभ्यः स्वाहा ।
सर्वयोगिनी हुं फट् स्वाहा ।
एष वलिर्योगिनीभ्यो नमः ।

इति दक्षतत्त्वमुद्रया तेनैवामृतेनोत्सृज्य,

ॐ या काचिद्योगिनी रौद्रा सौम्या सौम्यतरा परा ।
? भूचरी व्योमचरी प्रीता सन्तु मे सदा ।।

इति पुष्पाञ्जलिं दत्त्वा, नमेत ।

।। इतियोगिनीवलिः ।।

।। अथक्षेत्रपालबलिः ।।

पश्चिमे—

देहस्थाखिलदेवता गजमुखाः क्षेत्राधिपा भैरवाः ।
योगिभ्यो वटुकाश्च यक्षपितरो वेतालकाश्चेटकाः ।।
अन्ये दिक्चरभूचराश्च खचरा भूताः पिशाचाः ग्रहाः ।
स्तृप्ताः स्युः कुलपुत्रकाश्च पितरः पानं समं पञ्चमम् ।।

इति क्षेत्रपालं ध्यात्वा,

क्षां क्षीं क्षूं क्षैं क्षौं क्षः स्थानक्षेत्रपाल धूपदीपादि सहितं वलिं गृह्ण गृह्ण स्वाहा । एष वलिः क्षेत्रपालाय नमः ।

इति वाममुष्टिनिःसृताधोमुखसरलाकारतर्जन्या दद्यात् ।

ततः,

योऽस्मिन् क्षेत्रे निवासी च क्षेत्रपालः सः किङ्करः ।
प्रीतोऽयं बलिदानेन सर्वरक्षां करोतु मे ।।

इति पुष्पाञ्जलिं दत्त्वा प्रणमेत् ।

।। इतिक्षेत्रपालबलिः ।।

॥ अथगणपतिबलिः ॥

उत्तरे—

यस्यार्चनेन विधिना किमपीह लोके ।
कर्मप्रसिद्धमिति नामफलं प्रसूते ॥
तं संततं सकलसाधकचित्तवृत्ति-
चिन्तामणिं कुलगणाधिपतिं नमामि ॥

इति गणपतिं ध्यात्वा ।

गां गीं गूं गैं गौं गः गणपतये वरवरद सर्वजनं मे वशमानय बलिं गृह्ण गृह्ण स्वाहा । एष बलिं गणपतये नमः ।

इति दण्डाकारं वामहस्तसर्वाङ्गुलिमध्येऽङ्गुष्ठं निधायोत्सृज्य,

बलिदानेन संतुष्टो गणपः सर्वसिद्धिदः ।
सर्वविघ्नहरो मेऽस्तु गणवृन्दनिषेवितः ॥

इति पुष्पाञ्जलिं दत्वा प्रणमेत् ।

॥ इतिगणपतिबलिदानम् ॥

॥ अथसर्वभूतबलिः ॥

ततः,

स्ववामे सर्वपीठोपपीठेषु द्वारोपस्तरणेषु च ।

इत्यादि—

सर्वकार्याणि कुर्वन्तु दोषान्मे घ्नन्तु सर्वदा ॥ इत्यन्तं सर्वभूतानि ध्यात्वा,

ॐ ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यः हुं फट् स्वाहा । एष बलिः सर्व भूतेभ्यो नमः । इति वामहस्ततत्त्व-मुद्रयोत्सृज्य,

ॐ ये भूता विघ्नकरादिदिक्षु भूम्यन्तरिक्षगाः ।
पातालतलसंस्थाश्च शिवयोगेन भाविताः ।।
गन्धर्वाद्याः सत्यसन्धाश्च इन्द्राद्याः शक्त्युपास्थिताः ।
तृप्यन्तु प्रीतमनसो भूता गृह्णान्त्विमं बलिम् ।।

इति पुष्पाञ्जलिं दत्त्वा प्रणमेदिति । अत्राशक्तश्चेत् स्ववामे सर्वं भूतबलिमेकमेव दद्यात् ।

।। इतिसर्वभूतबलिः ।।

।। अथकामकलाध्यानम् ।।

मुखं विन्दुवदाकारं तदधः कुचयुग्मकम् ।
सर्वविद्यामृतापूर्णं सर्ववाग्विभवप्रदम् ।
सर्वार्थसाधकं देवीं सर्वरञ्जनकारकम् ।
तदधः सपरार्धं च चिन्तयेत्तदधोमुखम् ।
सर्वदेवादिभूतं तत् सर्वदेवनमस्कृतम् ।
सर्वाह्लादनसम्पूर्णं सर्ववर्णप्रवर्तकम् ।
एतत् कामकलाध्यानं गोप्यं साधकसत्तमैः ।।

।। अथोपचाराः ।।

इति श्लोकोक्त कामकलारूपमात्मानं ध्यात्वा, कूर्ममुद्रया पुष्पाञ्जलिं गृहीत्वा, आःकाराद्रक्तपङ्कजमित्यादि पूर्वोक्ताधारे करालवदनामित्यादि ध्यानोक्त देवतारूपमात्माभेदेन कुलकुण्डलिनीं मूलाधारात् ब्रह्मपथात् हृत्कमले समानयेत् ।

ततः करकलितदूर्वाक्षतरक्तचन्दनमिलित दिनकर किरणारुण कुसुमाञ्जलौ मातृकायन्त्रं ध्यात्वा, स्वहृदयान्मूल तेजोमयीं, शुद्धज्ञानचैतन्यरूपां, षट्चक्रभेदक्रमेण शिरसि स्थितसहस्रदलकर्णिकान्तर्गतं परशिवं प्रापयित्वा, क्रियासमभिव्याहरेण तदमृताम्बुधौ विश्राम्य, तदमृतलोलीभूतामानन्दमयीं तां वहन्नासापुटेनाञ्जलिस्थ पुष्पेष्वागतां विभाव्य, तानि पुष्पाणि—

देवेशि भक्तसुलभे परिवारसमन्विते ।
यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरी भव ।।

इति पठन्, यन्त्र प्रतिमादौ स्थाप्य,

श्रीमहाकालसहिते श्रीमद्दक्षिणकालिके इहावह ।

इत्यावाहने ऊर्ध्वाञ्जलिरूपां मुद्रां प्रदर्शयेत् ।

इह तिष्ठ इह तिष्ठ । इति स्थापने अधोमुखाञ्जलिं, इह सन्निधेहि सन्निधेहि । इति सन्निधापने उत्तानाङ्गुष्ठमुष्टिसंयोगात्मिकाम्; इह सन्निहिता भव । इति सम्मुखीकरणे उत्तान मुष्टि युगलरूपां मुद्रां प्रदर्शयेत् ।

ततः आत्मवद्देव्यङ्गे षडङ्गं विधाय, खड्गादिमुद्राः प्रदर्शयेत्,

।। अथमुद्राः ।।

अथ क्रमेण खड्गादि मुद्रामाह—

कनिष्ठानामिके बद्ध्वा स्वाङ्गुष्ठेन दक्षतः ।
शेषाङ्ली तु प्रसृते संस्पृष्टे खड्गमुद्रिका ।
अन्तराङ्गुष्ठमुष्टिञ्च कृत्वा वामकरस्य च ।
मध्यमाभ्यां दक्षिणस्य तथालम्ब्य प्रयत्नतः ।
मध्यमेनाथ तर्जन्या अंगुष्ठाग्रं नियोज्य च ।
दक्षिणं योजयेत्पाणिं वाममुष्टौ तु साधकः ।
दर्शयेद्दक्षिणे भागे मुण्डमुद्रेयमुच्यते ।।
अधः स्थितो दक्षहस्तः प्रसृतो वरमुद्रिका ।
ऊर्ध्वकृतो वामहस्तः प्रसृतोऽभयमुद्रिका ।
तर्जन्यानामिके मध्ये कनिष्ठे च क्रमादपि ।
करयोर्योजयेच्चैव कनिष्ठामूलभेवतः ।
अङ्गुष्ठाग्रं तु निक्षिप्य महायोनिः प्रकीर्तिताः ।।

इति क्रमेण खड्गमुण्डवराभयमहायोनिमुद्राः प्रदर्शयेत् ।

॥ इतिमुद्राः ॥

॥ पाद्यम् ॥

स्वागत्य, कुशलमिममासनमास्यतामित्यभिलाप्य, अग्नीशासुरवायव्यमध्ये दिक्षु च षडङ्गं विभाव्य पञ्चदशकोणेषु काल्यादि पञ्चदशदेवीर्यथोक्त-क्रमेण ध्यात्वा, अष्टदले ब्राह्म्याद्यष्टदेवीर्यथोक्तक्रमेण विभाव्य, मूलमन्त्रमुच्चार्य, *महाकालसहिते दक्षिणेकालिके सायुधे सपरिवारे मातस्तृप्यताम् ॥* इति देवी पात्रामृतेन त्रिः सकृद्वा तर्पयित्वा, मूलेन *एतत्पाद्यं महाकाल सहितायै अमुकी देव्यै नमः* इति पात्रामृतेन पाद्यं दद्यात् ।

॥ अर्घ्यम् ॥

पादयोस्ततो मूलमुच्चार्य **इदमर्घ्यं स्वाहेति** शिरसि अर्घ्यपात्रामृतेन अर्घ्यं दद्यात् ।

॥ मधुपर्कः ॥

ततो मूलेन **महाकालसहितायै अमुकीदेव्यै एष मधुपर्को नम** इति मुखे दत्त्वा, तत आचमनीयमप्येवं दत्त्वा,

॥ स्नानीयाद्युपचाराः ॥

मूलेन **इदं स्नानीयं नम** इति सर्वाङ्गे दत्त्वा, गन्धमप्येवं दत्त्वा; मूलेन **महाकालसहितायै दक्षिणकालिकायै पुष्पाणि वौषडिति** वारत्रयं पुष्पाणि दत्त्वा, मूलेनैव धूपादिदत्त्वा, मूलेन दीपं दत्त्वा, ततस्तत्त्व मुद्रया वामहस्ते आसवपात्रमादाय, दक्षहस्तेन शुद्धिं गृहीत्वोभौ करौ संयोज्य,

**ॐ परमं वारुणीकल्पं कोटिकल्पान्तकारिणम् ।**
**गृहाण कवितासिद्धिं देहि मे मोक्षदायिनि ॥**

मूलान्ते **शुद्धिसहितमिदमासवं श्रीमद्दक्षिणकालिकायै नम** इति देव्याः वदनसरोरुहे निवेद्य, पात्रं स्ववामे सम्मुखे वा आधारोपरि निदध्यात् ।

पुनस्तृतीयासहितं द्वितीयं पात्रं मुद्रासहितं तृतीयं निवेद्य, पूर्ववत् स्थाप्य, प्रार्थयेद्यथा—

**शुद्ध्यासवरसास्वाद परमानन्दनिर्भरे ।**
**अपारे भवसंसारे त्राहि मां परमेश्वरि ।।**

इति प्रार्थ्य, पुरतो त्रिकोणचतुरस्रमण्डलं निर्माय, नैवेद्यपात्रं मण्डलोपरि संस्थाप्य, तत्त्वमुद्रया संस्पृश्य, बलि पात्रामृतेन मूलमन्त्रेण **महाकाल सहितायै नैवेद्यमिदं निवेदयामीति** निवेद्य, देव्याः दक्षिणभागे भैरवं पूजयित्वा भैरवपात्रामृतेन संतर्पयेत् ।

।। इत्युपचाराः ।।

ब्रह्मानन्दनाथश्रीपादुकां पूजयामि ।
पूर्णदेवानन्दनाथश्रीपादुकां पूजयामि ।
चलचित्तानन्दनाथश्रीपादुकां पूजयामि ।
चलाचलानन्दनाथश्रीपादुकां पूजयामि ।
कुमारानन्दनाथश्रीपादुकां पूजयामि ।
क्रोधानन्दनाथश्रीपादुकां पूजयामि ।
वरदानन्दनाथश्रीपादुकां पूजयामि ।
स्मरदीपानन्दनाथश्रीपादुकां पूजयामि ।
मायां वा श्रीपादुकां पूजयामि ।
मायावत्यं वा श्रीपादुकां पूजयामि ।

एते दिव्यौघाः ।

विमलानन्दनाथश्रीपादुकां पूजयामि ।
कुशलानन्दनाथश्रीपादुकां पूजयामि ।

इति क्रमेण **खड्गमुण्डवराभयमहायोनिमुद्राः** प्रदर्शयेत् ।

॥ इतिमुद्राः ॥

॥ पाद्यम् ॥

स्वागत्य, **कुशलमिममासनमास्यताम्**इत्यभिलाप्य, अग्नीशासुरवायव्यमध्ये दिक्षु च षडङ्गं विभाव्य पञ्चदशकोणेषु काल्यादि पञ्चदशदेवीर्यथोक्त-क्रमेण ध्यात्वा, अष्टदले ब्राह्म्याद्यष्टदेवीर्यथोक्तक्रमेण विभाव्य, मूलमन्त्रमुच्चार्य, *महाकालसहिते दक्षिणेकालिके सायुधे सपरिवारे मातस्तृप्यताम्* ॥ इति देवी पात्रामृतेन त्रिः सकृद्वा तर्पयित्वा, मूलेन *एतत्पाद्यं महाकाल सहितायै अमुकी देव्यै नमः* इति पात्रामृतेन पाद्यं दद्यात् ।

॥ अर्घ्यम् ॥

पादयोस्ततो मूलमुच्चार्य **इदमर्घ्यं स्वाहेति** शिरसि अर्घ्यपात्रामृतेन अर्घ्यं दद्यात् ।

॥ मधुपर्कः ॥

ततो मूलेन **महाकालसहितायै अमुकीदेव्यै एष मधुपर्को नम** इति मुखे दत्त्वा, तत आचमनीयमप्येवं दत्त्वा,

॥ स्नानीयाद्युपचाराः ॥

मूलेन **इदं स्नानीयं नम** इति सर्वाङ्गे दत्त्वा, गन्धमप्येवं दत्त्वा; मूलेन **महाकालसहितायै दक्षिणकालिकायै पुष्पाणि वौषडिति** वारत्रयं पुष्पाणि दत्त्वा, मूलेनैव धूपादिदत्त्वा, मूलेन दीपं दत्त्वा, ततस्तत्व मुद्रया वामहस्ते आसवपात्रमादाय, दक्षहस्तेन शुद्धिं गृहीत्वोभौ करौ संयोज्य,

**ॐ परमं वारुणीकल्पं कोटिकल्पान्तकारिणम् ।**
**गृहाण कवितासिद्धिं देहि मे मोक्षदायिनि ॥**

मूलान्ते **शुद्धिसहितमिदमासवं श्रीमद्दक्षिणकालिकायै नम** इति देव्याः वदनसरोरुहे निवेद्य, पात्रं स्ववामे सम्मुखे वा आधारोपरि निदध्यात् ।

पुनस्तृतीयासहितं द्वितीयं पात्रं मुद्रासहितं तृतीयं निवेद्य, पूर्ववत् स्थाप्य, प्रार्थयेद्यथा—

**शुद्ध्यासवरसास्वाद परमानन्दनिर्भरे ।**
**अपारे भवसंसारे त्राहि मां परमेश्वरि ।।**

इति प्रार्थ्य, पुरतो त्रिकोणचतुरस्रमण्डलं निर्माय, नैवेद्यपात्रं मण्डलोपरि संस्थाप्य, तत्त्वमुद्रया संस्पृश्य, बलि पात्रामृतेन मूलमन्त्रेण **महाकाल सहितायै नैवेद्यमिदं निवेदयामीति** निवेद्य, देव्याः दक्षिणभागे भैरवं पूजयित्वा भैरवपात्रामृतेन संतर्पयेत् ।

।। इत्युपचाराः ।।

*ब्रह्मानन्दनाथश्रीपादुकां* पूजयामि ।
*पूर्णदेवानन्दनाथश्रीपादुकां* पूजयामि ।
*चलचित्तानन्दनाथश्रीपादुकां* पूजयामि ।
*चलाचलानन्दनाथश्रीपादुकां* पूजयामि ।
*कुमारानन्दनाथश्रीपादुकां* पूजयामि ।
*क्रोधानन्दनाथश्रीपादुकां* पूजयामि ।
*वरदानन्दनाथश्रीपादुकां* पूजयामि ।
*स्मरदीपानन्दनाथश्रीपादुकां* पूजयामि ।
*मायां वा श्रीपादुकां* पूजयामि ।
*मायावत्यं वा श्रीपादुकां* पूजयामि ।

एते दिव्यौघाः ।

*विमलानन्दनाथश्रीपादुकां* पूजयामि ।
*कुशलानन्दनाथश्रीपादुकां* पूजयामि ।

भीमसेनानन्दनाथश्रीपादुकां पूजयामि ।
सुधाकरानन्दनाथश्रीपादुकां पूजयामि ।
मीतानन्दनाथश्रीपादुकां पूजयामि ।
गोरक्षानन्दनाथश्रीपादुकां पूजयामि ।
भोजदेवानन्दनाथश्रीपादुकां पूजयामि ।
प्रजापत्यानन्दनाथश्रीपादुका पूजयामि ।
मूलदेवानन्दनाथश्रीपादुकां पूजयामि ।
रतिदेवानन्दनाथश्रीपादुकां पूजयामि ।
विघ्नदेवानन्दनाथश्रीपादुकां पूजयामि ।
हुताशनानन्दनाथश्रीपादुकां पूजयामि ।
समयानन्दनाथश्रीपादुकां पूजयामि ।
सन्तोषानन्दनाथश्रीपादुकां पूजयामि ।

एते मानवौघाः ।

## ॥ परिवारदेवतापूजनम् ॥

ततः पुष्पाञ्जलिमादाय,

**संविन्मयि परे देवि परामृतरसप्रिये ।**
**अनुज्ञां कालिके देहि परिवारार्चनाय मे ।।**

अनेन प्रार्थयित्वा, पुष्पाञ्जलिं निक्षिप्याज्ञां गृहीत्वा, देवीमेव परिवाररूपेण परिणतां ध्यात्वा, परिवारदेवताः पूजयेत् ।

### ॥ गुरुपङ्क्तिपूजनम् ॥

**'अत्र सर्वत्र पूजकयोरन्तरालं प्राची'** तदनुसारेण प्राच्यादिदिशश्च प्रकल्प्य, आदौ वायव्यादीशानपर्यन्तं गुरुपङ्क्तिं पूजयेत् । तत्र ते—

**रक्तमाल्यांबरमूषभूषाद्यलङ्कृताः पङ्कजविष्टरस्थाः ।**
**सर्वे च सालम्बनयोगनिष्ठाः प्राप्ताखिलैश्वर्यगुणाष्टकार्थाः ।।**

इति ध्यात्वा, पूजयेत् । यथा—

*महादेवीं वा श्रीपादुकां पूजयामि ।*
*महादेवानन्दनाथश्रीपादुकां पूजयामि ।*
*त्रिपुरां वा श्रीपादुकां पूजयामि ।*
*भैरवानन्दनाथश्रीपादुकां पूजयामि ।*

एते दिव्यौघाः ।

एतान् पुष्पादिभिः सम्पूज्य, गुरुपादामृतेन तत्त्वमुद्रया त्रिः सकृद्वा संतर्प्य, मानवौघ समीपे,

*ऐं ह्रीं श्रीं हसखफ्रें हसक्षमलवरयूं हसखफ्रें सहक्षमलवरयीं श्री अमुकानन्दनाथामुकीदेवीं वा श्रीपादुकां पूजयामि ।*

स्वगुरुन्—

*श्रीगुरुनाथश्रीपादुकां पूजयामि ।*
*परमगुरुश्रीपादुकां पूजयामि ।*
*परापरगुरुश्रीपादुकां पूजयामि ।*
*परमेष्टिगुरुनाथश्रीपादुकां पूजयामि ।*

इति गुरुचतुष्टयं च पूर्ववत्पूजयेत्तर्पयेच्च ।

ततः पुष्पाञ्जलिमादाय, मूलमुच्चार्य, **भगवति दक्षिणकालिके—**

**अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।**
**भक्त्या समर्पये तुभ्यं गुरुपंक्तिप्रपूजनम् ।।**

**।। इतिगुरूपंक्तिपूजनम् ।।**

**।। अथप्रथमावरणार्चनम् ।।**

ततो मध्यत्रिकोणमध्ये **अग्नीशासुरवायव्यमध्ये दिक्ष्वङ्गपूजनम्** इतिवचनमनुगच्छेत् । तत्र—

**तुषारस्फटिकश्यामनीलकृष्णारुणार्चिषः ।**
**वरदाभयधारिण्यः प्रधानतनवस्त्रियः ।।**

इति ध्यात्वा,

*ॐ क्रां हृदयशक्तये श्रीपादुकां पूजयामि ।*
*ॐ क्रीं शिरःशक्तये श्रीपादुकां पूजयामि ।*
*ॐ क्रूं शिखाशक्तये श्रीपादुकां पूजयामि ।*
*ॐ क्रैं कवचशक्तये श्रीपादुकां पूजयामि ।*
*ॐ क्रौं नेत्रत्रयशक्तये श्रीपादुकां पूजयामि ।*
*ॐ क्रः अस्त्रशक्तये श्रीपादुकां पूजयामि ।*

इति । अङ्ग देवताः पुष्पादिभिः सम्पूज्य,

श्रीपात्रामृतेन तत्त्वमुद्रया त्रिः सकृद्वा तर्पयेत् । आद्यमावरणार्चनमिति पूर्ववत् समर्पयेत् ।

**।। अथद्वितीयावरणार्चनम् ।।**

ततः, पञ्चदशकोणेषु काल्यादिशक्तीः पूजयेत् । तत्र,

**सर्वाः श्यामा असिधरा मुण्डमालाविभूषणाः ।**
**स्तर्जनीवामहस्तेन धारयन्त्यश्च संस्मृताः ।**

इति ध्यात्वा, बाह्यतः प्रथमे त्रिकोणे प्रत्येकं कृत्वाष्टदलेष्टसुपत्रेषु अग्रादि प्रादक्षिण्येनार्चयेत् ।

**प्रथमे त्रिकोणे—**

*ॐ कालीश्रीपादुकां पूजयामि ।*
*कपालिनीश्रीपादुकां पूजयामि ।*
*विप्रचित्ताश्रीपादुकां पूजयामि ।*

**द्वितीये त्रिकोणे—**

*उग्राश्रीपादुकां पूजयामि ।*
*कुल्लाश्रीपादुकां पूजयामि ।*

तृतीयत्रिकोणे—

कुरुकुल्लाश्रीपादुकां पूजयामि ।

विरोधिनीश्रीपादुकां पूजयामि ॥

उग्राश्रीपादुकां पूजयामि ।

उग्रप्रभाश्रीपादुकां पूजयामि ।

दीप्ताश्रीपादुकां पूजयामि ।

चतुर्थे त्रिकोणे—

ॐ नीलाश्रीपादुकां पूजयामि ।

घनाश्रीपादुकां पूजयामि ।

बलाकाश्रीपादुकां पूजयामि ।

पञ्चमे त्रिकोणे—

ॐ मात्राश्रीपादुकां पूजयामि ।

मुद्राश्रीपादुकां पूजयामि ।

मिताश्रीपादुकां पूजयामि ।

इति पूर्ववत् सम्पूज्य, योगिनी पात्रामृतेन तर्पयेच्च । द्वितीयावरणार्चनमिति पूर्ववत् समर्पयेत् ।

॥ अथतृतीयावरणार्चनम् ॥

ततो ब्राह्म्यादिशक्तिध्यानं—

ब्राह्मणीं हंससमारूढां स्वर्णावर्णां चतुर्भुजाम् ।
घण्टां शङ्खं कपालं च ब्रह्मकूर्चं च पंकजम् ॥
दण्डं पद्माक्षसूत्रं च दधतीं चारुहासिनीम् ।
जटाजूटधरां देवीं भावयेत् साधकोत्तमः ॥

आं ब्राह्मीश्रीपादुकां पूजयामि ।

नारायणीं महादीप्तां श्यामां गरुडवाहिनीम् ।
नानालङ्कारसंयुक्तां चारुकेशीं चतुर्भुजाम् ।।
घण्टां शङ्खं कपालं च चक्रं संदधतीं पराम् ।
मधुमत्तां मदोल्लोलदृष्टिं सर्वाङ्गसुन्दरीम् ।।

*ई नारायणीश्रीपादुकां पूजयामि ।*

माहेश्वरीं वृषारूढां शुक्लां त्रिनयनान्विताम् ।
कपालं डमरुं चैव वरदाभयशूलकम् ।
टङ्कं च दधतीं देवीं नानाभरणभूषिताम् ।।

*ॐ माहेश्वरीश्रीपादुकां पूजयामि ।*

चामुण्डां चण्डहासां प्रकटितदशनां भीमवक्त्रां त्रिनेत्राम् ।
नीलाम्भोजप्रभाभां प्रमुदितवपुषां नारमुण्डालिमालाम् ।।
खड्गं शूलं कपालं नरशिरघटितं खेटकं धारयन्तीम् ।
प्रेतारूढां प्रमत्तां मधुमदमुदितां भावयेच्चण्डरूपाम् ।।

*ऋं चामुण्डाश्रीपादुकां पूजयामि ।*

कौमारीं कुङ्कुमाभां च त्रिनेत्रां शिखिसंस्थिताम् ।
चतुर्भुजां शक्तिपाशमङ्कुशाभयधारिणीम् ।
नानालङ्कारसंयुक्तां प्रमत्तां परिचिन्तयेत् ।।

*ऌ कौमारीश्रीपादुकां पूजयामि ।*

अपराजितां च पीताभामक्षसूत्रवरप्रदाम् ।
कमलं मातुलुङ्गं च दधतीं परिचिन्तयेत् ।।

*ऐं अपराजिताश्रीपादुकां पूजयामि ।*

वाराहीं धूम्रवर्णाभां वराहवदनां शुभाम् ।
फलकं खड्गमुशले हलं वेदभुजैर्धृताम् ।

*औं वाराहीश्रीपादुकां पूजयामि ।*

नारसिंही नृसिंहस्य बिभ्रतीं सदृशं वपुः ।।

*अः नारसिंहीश्रीपादुकां पूजयामि ।*

इति सम्पूज्य, पूर्ववद्योगिनीपात्रामृतेन संतर्पयेत्। तृतीयावरणार्चनमिति पूर्ववत् संतर्प्य भैरवान् ध्यायेत्।

।। अथचतुर्थावरणार्चनम् ।।

दधतोऽजनपुंजनीलवर्णानूरुवेतालकपालशूलदण्डीन् ।
लघुडुडुभिसंयुक्तान् त्रिनेत्रान् करदण्डीपरिहस्तदण्डखण्डैः ।।
गजकृत्तिनिर्वर्त्तितोत्तरीयान् भ्रुकुटीसंघटितैर्ललाटपट्टैः ।
ललितालिकुलाभकुन्तलाग्रान् मुदितान्तःकरणान् सुयौवनाढ्यान् ।।

इति ध्यात्वा, अग्रादि प्रादक्षिण्येन पात्राग्रेषु प्रपूजयेत्—

ऐं ह्रीं असिताङ्गभैरवश्रीपादुकां पूजयामि ।
ऐं ह्रीं रुरुभैरवश्रीपादुकां पूजयामि ।
ऐं ह्रीं चण्डभैरवश्रीपादुकां पूजयामि ।
ऐं ह्रीं उन्मत्तभैरवश्रीपादुकां पूजयामि ।
ऐं ह्रीं कपालिभैरवश्रीपादुकां पूजयामि ।
ऐं ह्रीं भीषणभैरवश्रीपादुकां पूजयामि ।
ऐं ह्रीं संहारभैरवश्रीपादुकां पूजयामि ।

इति पूर्ववत् सम्पूज्य, भैरवपात्रामृतेन संतर्प्य, चतुर्थावरणार्चनमिति समर्प्य,

।। अथपञ्चमावरणार्चनम् ।।

चतुरस्रे पूर्वादिप्रसिद्धदिक्षु प्रादक्षिण्येन लोकपालान् पूजयेत्—

लां इन्द्रश्रीपादुकां पूजयामि ।
यां यमश्रीपादुकां पूजयामि ।
वां वरुणश्रीपादुकां पूजयामि ।
सां सोमश्रीपादुकां पूजयामि ।

एं अग्निश्रीपादुकां पूजयामि ।

क्षां निर्ऋतिश्रीपादुकां पूजयामि ।

यां वायुश्रीपादुकां पूजयामि ।

हां ईशानश्रीपादुकां पूजयामि ।

ह्रीं अनन्तश्रीपादुकां पूजयामि ।

आं ब्रह्माश्रीपादुकां पजयामि ।

पञ्चमावरणार्चनमिति पूर्ववत् समर्प्य,

॥ अथषष्ठावरणार्चनम् ॥

तद्बहिश्चतुरस्त्रे पूर्वादिप्रादक्षिण्येन वज्रादीन् प्रपूजयेत् ।

वज्रश्रीपादुकां पूजयामि । शक्तिश्रीपादुकां पूजयामि ।

पाशश्रीपादुकां पूजयामि । अङ्कुशश्रीपादुकां पूजयामि ।

दण्डश्रीपादुकां पूजयामि । खड्गश्रीपादुकां पूजयामि ।

गदाश्रीपादुकां पूजयामि । त्रिशूलश्रीपादुकां पूजयामि ।

अधश्चक्रश्रीपादुकां पूजयामि । उर्ध्वपद्मश्रीपादुकां पूजयामि ।

षष्ठावरणार्चनमिति पूर्ववत् समर्प्य,

**पीतशुक्लासिताकाशविद्युद्रक्तसितासिता ।**

**कोकनदार्कदलाः वज्राद्याः परिकीर्तितता ॥**

इति ध्यानम्,

॥ अथास्त्रपूजा ॥

ततो देव्यस्त्राणि पूजयेत्—

वामोर्ध्वहस्ते खड्गश्रीपादुकां पूजयामि, तदधो मुण्डश्रीपादुकां पूजयामि, दक्षाधः अभय श्रीपादुकां पूजयामि, ऊर्ध्व वर श्रीपादुकां पूजयामि,

। अथदेवीपूजनम् ।।

इति सम्पूज्य, घटस्थं द्रव्यं शुद्ध्यादिसहितं देव्यै निवेद्य, पुनर्देवीं सम्पूज्य, पुनर्योन्यादिमुद्राः प्रदर्श्य, महाकालमन्त्रमुच्चार्य, *महाकाल श्रीपादुकां पूजयामि* । इति दक्षिणभागे महाकालं त्रिः सम्पूज्य, मूलमुच्चार्य, *साङ्गा सपरिवारा सवाहना महाकालसहिता श्रीमद्दक्षिण-कालिकामातस्तृप्यतामिति* त्रिः सन्तर्प्य, पुनर्गन्धादिभिः पूजयेत् । यथा—मूलमुच्चार्य,

**परमानन्दसौरम्यपरिपूर्णदिगन्तरे ।**
**गृहाण परमं गन्धं कृपया परमेश्वरि ।।**

*महाकालसहितदक्षिणकालिकायै गन्धं समर्पयामि नमः* । इति कनिष्ठया गन्धं समर्पयेत् । कनिष्ठाङ्गुष्ठयोगेन गन्धं मुद्रां प्रदर्शयेत् ।

## ।। प्रधानदेवतापूजा ।।

ततः पुष्पाण्यादाय मूलमुच्चार्य,

**तुरीयस्थानसम्भूतं नानागुणमनोहरम् ।**
**अमन्दसौरभं पुष्पं गृहाणमिदमुत्तमम् ।।**

*महाकालसहितदक्षिणकालिकायै पुष्पाणि* वौषडिति तर्जन्यगुष्ठयोगेन पुष्पमुद्रां प्रदर्शयेत् ।

ततोऽपूपपात्रं ***फडिति*** प्रोक्ष्य, ***नमः*** इति पुष्पं दत्त्वा, वामतर्जन्या स्पृशन्, मूलमुच्चार्य,

**वनस्पतिरसो दिव्यः गन्धाढ्यः सुमनोहरः ।**
**आध्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ।।**

*साङ्गायै सपरिवारायै महाकालसहितश्रीमद्दक्षिणकालिकायै* धूपं *निवेदयामि नमः* । शंखजलमुत्सृज्य, तर्जन्यङ्गुष्ठयोगेन धूपमुद्रां

प्रदर्श्य, **जयध्वनिमन्त्रमातः स्वाहेति** गन्धपुष्पाक्षतैः पूजितां घण्टां वामहस्तेन वादयन् देवतागुणनामयशःस्तुत्यादिकीर्तयन्, देवीं धूपयेत् ।

ततो दीपपात्रं ***फडिति*** प्रोक्ष्य ***नमः*** इति पुष्पं दत्त्वा वाममध्यमयास्पृशन् मूलमुच्चार्य,

**सुप्रकाशो महादीपः सर्वत्र तिमिरापहः ।**
**स बाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ।।**

*साङ्गायै सपरिवारायै महाकालसहितायै श्रीमद्दक्षिणकालिकायै दीपं निवेदयामि नमः ।*

इति शंखजलमुत्सृज्य, मध्यमाङ्गुष्ठयोगेन **दीप**मुद्रां प्रदर्श्य, पूर्ववत् घण्टां वादयन् नेत्रादि पादपर्यन्तं दीपं प्रदर्शयेत् ।

शोधितघटद्रव्याहूतवीराणां तर्पणोपयोगिद्रव्यं शुद्धिपात्रञ्च, शुद्धि पात्रे निधाय शिष्टद्रव्ययुतं घटमेव सम्मुखे कृत्वा—

*ॐ कालि कालि हुं हुं अमृतमासवं विधिवत् स्वादु कुरु कुरु स्वाहेति* मन्त्रेण सप्तधाभिमन्त्र्य, शुद्ध्यादिकं च सर्वं देव्यग्रे दक्षे वाधारोपरि स्थाप्य, ततः शुद्धितृतीयामुद्रानानाव्यञ्जनाद्यनेकविधनैवेद्यं स्वर्णादि पात्रेषु परिविष्य, कारणचषकं चैकं तत्र संस्थाप्य, नैवेद्यपात्रं देविदक्षे सम्मुखे वा त्रिकोणमण्डलोपरि निधाय, ***फडि***त्यर्घ्योदकेनाभ्युक्ष्य, ***यमि***ति वायुबीजेन संशोष्य, ***रमि***ति वह्निबीजेन संदह्य ***हुमि***त्यवगुण्ठ्य, ***वमि***ति ***धेनु***मुद्रयामृतीकृत्य, तदुपरि मूलं सप्तधा जप्त्वा, वामहस्ताङ्गुष्ठेन नैवेद्यपात्रं स्पृशन् मूलमन्त्रान्ते—

**हैमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ।**
**पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि ।।**

*एतदन्नव्यञ्जनादीनि श्रीमद्दक्षिणकालिकायै निवेदयामि नमः* इति **वामतत्त्व**मुद्रयार्घ्योदकेनोत्सृज्य, *ॐ अमृतोपस्तरणमसि स्वाहा ।* इति जलं दत्त्वा वामहस्ते विकचोत्पलसदृशीं **ग्रास**मुद्रां प्रदर्श्य,

दक्षिण—वृद्धानामिकनिष्ठिकाभिः सहिताभिः *प्राणाय स्वाहा* ॥
वृद्धामध्यमातर्जनीभिः *अपानाय स्वाहा* ॥
वृद्धामध्यमानामाभिः *व्यानाय स्वाहा* ॥
वृद्धातर्जनीमध्यमानामाभिः *उदानाय स्वाहा* ॥
सर्वाभिरङ्गुलिभिः *समानाय स्वाहा* ॥

इति ग्रासमुद्रां प्रदर्श्य ततः क्षणं देवीं भोजनाभिरतां विभाव्य—

**ब्रह्मेशाद्यैः सरसमभितः सूपविष्टैः समन्तात् ।**
**शिञ्जद्वालव्यजननिकरैर्व्यज्यमाना सखीभिः ॥**
**नर्मक्रीडाप्रहसनपरा पंक्तिभोक्तॄन् हसन्ती ।**
**भुक्ते पात्रे कनकघटिते षड्रसान् विश्वमाता ॥**

इति ध्यात्वा, भोजननिवृत्तां तृप्तां विभाव्य, *ॐ अमृतोपधानमसि स्वाहेति* शुद्ध्यर्थं जलं दद्यात् ।

ततः श्रीपात्रामृतेन त्रिर्देवीं संतर्प्य एलालवङ्गकर्पूरादियुतं ताम्बूलं दत्त्वा,

**॥ इतिदेवीपूजनोपचाराः ॥**

**॥ अथारार्तिक्यम् ॥**

कुलारार्तिकं समर्पयेद्यथा—

स्वर्णादिपात्रे त्रिकोणगर्भितमष्टदलपद्मं दत्त्वा, सगुडशालिगोधूमचूर्णपिण्डनिर्मितान् सार्धत्रिकोणाकारान् डमरुसदृशान् नवदीपान्; अशक्तौ व्यवधीन् विधाय तेष्वेकं मध्येऽन्यानष्टदलेषु संस्थाप्य, घृतेन पूरयित्वा, वर्तिकाः संयोज्य, संज्वाल्य—

*श्रीं सौः ग्लूं स्लूं म्लूं न्लूं हसौं स्हौं श्री रत्नेश्वर्यै नमः* इति मूलेनैव वा सम्पूज्य, उत्थाप्य, पात्रं दक्षहस्तेनोत्तोल्य, वामेन घण्टां वादयन् मूलान्ते—

**ॐ समस्तचक्रचक्रेशि युते देवि नवात्मिके।**
**आरार्तिकमिदं देवि गृहाण मम सिद्धये॥**

इति मन्त्रेण पादादि नेत्रान्तं नेत्रादि पादान्तमेवं नवधा त्रिधा वा देव्युपरि परिभ्राम्य नीराजयेत्।

ततो मूलेन पुष्पाञ्जलिपञ्चकं दत्त्वा श्रीपात्रामृतेन साङ्गां सवाहनां सायुधां सपरिवारां सावरणां देवीं त्रिः सन्तर्प्य, साष्टाङ्गं पञ्चाङ्गं वा विशेषतस्त्रिकोणाकारेण प्रणिपत्य बलिं दद्यात्।

॥ इत्यारार्तिकम् ॥

॥ अथबलिदानविधिः ॥

स्ववामे त्रिकोणवृत्तचतुरस्रमण्डलं विरच्य *अमुकीदेवीबलिमण्डलाय नमः* इति पुष्पादिभिस्तमभ्यर्च्य तत्र साधारं विहितबल्यन्नपूरितं ससलिलंपात्रं निधाय, तत्र *बलिद्रव्याय नमः* इति सम्पूज्य— *एह्येहि जगतां मातर्जगतां जननि गृह्ण-गृह्ण इमम् सामिषान्नं बलिं सिद्धिं देहि शत्रुक्षयं कुरु कुरु हूं हूं ह्रीं ह्रीं फट् स्वाहा। एष बलिर्दक्षिण कालिकायै नमः। ॐ हूं महाकाल श्मशानाधिप इमं सामिषान्नं बलिं गृह्ण गृह्ण विघ्न निवारणं कुरु कुरु सिद्धिं मे प्रयच्छ स्वाहा। एष बलिर्महाकालाय नमः।*

॥ इतिबलिदानविधिः ॥

॥ अथजपक्रमः ॥

ततो रहस्यमालयाऽष्टोत्तरसहस्रमष्टोत्तरशतमशक्तौ विंशत्यन्यूनं वा प्रतिदिनं जपेत्। तद्विधिर्यथा—

तत्रादौ प्राणानायम्य, पूर्ववत् ऋष्यादिकं न्यस्य,

*गं गुरुभ्यो नमः पं परमगुरुभ्यो नमः पं परापरगुरुभ्यो नमः* इति गुर्वादि नतः,

मूलाधारे तु सा शक्तिः भुजगाकाररूपिणी ।
झिंझिकाव्यक्तमधुरा कूजन्ती सा तथोत्थिता ।।
गच्छन्ती ब्रह्मरन्ध्रेण प्रविशन्ती स्वकेतने ।
यातायातक्रमेणैव तत्र कुर्यान्मनोलयम् ।।

इतिशिखां स्मृत्वा, कामरमाशक्तिवीजेष्वन्यतरवीजान्ते मातृकामुच्चरेदिति मन्त्रचैतन्यं जप्त्वा,

दुर्गोत्तारणवाच्यस्सतारकार्थस्त्वतारकः ।
मुक्त्यर्थो रेफ उक्तो महामायार्थकश्च ई ।।
विश्वमातार्थको नादो विन्दुः दुःखहरार्थकः ।
वधूबीजार्थं उक्तोक्तवस्त्रेहान्महेश्वरि ।।

तेन *स्त्रीं* इति मन्त्रार्थं विचार्य,

सहस्रदलकर्णिके सकलशीतरश्मिप्रभम् ।
वराभयकराम्बुजं विमलगन्धपुष्पार्चितम् ।।
प्रसन्नवदनेक्षणं सकलदेवतारूपिणम् ।
स्मरेच्छिरसि हंसगतं तदभिधानपूर्वं गुरुम् ।।

इति गुरुं ध्यात्वा,

हृदीष्टदेवतां ध्यायेत् । ध्यानं पूर्वमेवोक्तम् । *क्रीं हूं स्त्रीं ह्रीं फट्* इति कुल्लुकां करमालया शिरसि दशधा जपेत् । *ॐ* इति सेतुः ब्राह्मणक्षत्रिययोः एवं वैश्यस्य *फट्* शूद्रस्य *ह्रीं* इति सेतुं हृदि दशधा संजप्य, *क्रों* इति महासेतुं विशुद्धचक्रे दशधा जपेत् ।

प्रणवं पूर्वमुच्चार्य मातृकामन्त्रमुच्चरेत् ।
अथ मूलं महेशानि ततो वाग्भवमुच्चरेत् ।।
मातृकां च समस्तां च पुनः प्रणवमुच्चरेत् ।
पूर्वपुटितं मूलं तु जपेत् मणिपूरके ।।

इति **निर्वाणं** दशधा जपेत् मायाश्रीकामप्रणवानामन्यतमेन सम्पुटितं मूलं जपेदिति **योनिमुद्रयाशक्तानामनुकल्पः।** पुनः प्राणानायम्य, पूर्वोक्ताङ्ग-न्यासकरन्यासौ कृत्वा,

*क्रीं क्रीं क्रीं ॐ ॐ ॐ क्लीं क्लीं क्लीं*, इति मुखे दशधा **मुखशोधनम्** जपेत्।

*क्रीं मूलं क्रीमिति प्राणयोगः* दशधा जपेत्।

*ॐ मूलं ॐ इति दीपनीं* दशधा जपेत्।

ॐ मूलं ॐ इत्यशौचभङ्गक्रमेण दशधा जपेत्।

ततो भ्रुवोर्मध्ये नासयोरग्रे वा दृष्टिं न्यस्य, पुनः **सेतुं** दशधा संजप्य, पात्राद्युपरिस्थापितं रहस्यमालाम्,

**ॐ माले माले महामाले, सर्वशक्तिस्वरूपिणी।**
**चतुर्वर्गस्त्वयिन्यस्तस्मात्त्वं सिद्धिदा भव॥**

इत्यनेन गन्धपुष्पाभ्यामभ्यर्च्य,

**ॐ अविघ्नं कुरु माले त्वं जपकाले सदा मम।**
**त्वं माले सर्वमन्त्राणामभीष्टसिद्धिकरी भव॥**

इति दक्षहस्तेनादाय मन्त्रध्यानपूर्वकं हृदीष्टदेवतां स्मरन्, अष्टोत्तर-सहस्रमष्टोत्तरशतं वा जप्त्वा,

**माले त्वं सर्वदेवानां प्रीतिदा शुभदा भव।**
**शुभं कुरुष्व मे देवि यशोवीर्यं ददस्व मे॥**

इति मन्त्रेण मालां शिरसि निधाय,

**गुह्यात् गुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम्।**
**सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि॥**

इति तेजोरूपं जपफलं देव्या वामकरे समर्प्य, पुनः **सेतुं** दशधा जप्त्वा, पूर्ववदशौचभङ्गं प्राणायामं च कृत्वा, मालां यथास्थानं स्थापयेत्,

**॥ इतिजपक्रमनिरूपणम् ॥**

अत्राशक्तानां कुल्लुकां सेतुमहासेतुनिर्वाणाङ्गन्यासकरन्यासमुद्राशोधना-शौचभङ्गकुण्डलिनीध्यानान्यनावश्यकानि, इति ।

॥ अथपूजाङ्गहोमविधिः ॥

अत्रावसरे पूजाङ्गहोमं कुर्यात् । तत्र स्वदक्षिणहस्तप्रमाणं चतुरस्रं चतुरङ्गुलमुच्छ्रितं स्थाण्डिलं कृत्वा मूलेन वीक्ष्य, **फडिति** प्रोक्ष्य, तेनैव दर्भैः संताड्य हुं इति मुष्टिना सिञ्च्य, मूलेन अग्निं स्थापयित्वा, तत्र देवीं ध्यात्वा, गन्धाद्यैः सम्पूज्य, आज्येन व्याहृतिहोमं कृत्वा, मूलमन्त्रेण पञ्चविंशतिसंख्यया हुत्वा, पुनर्व्याहृतिभिर्हुत्वा, गन्धाद्यैः सम्पूज्य, देवतां पीठमूर्तौ संयोज्य, वह्निं विसर्जयेत् ।

**भो भो वह्ने महाशक्ते सर्वकर्म प्रसाधक ।**
**कर्मान्ते देव सम्प्राप्ते सान्निध्यं कुरु सादरम् ॥**

॥ इतिहोमविधिः ॥

॥ अथस्तोत्रादिविधायम् ॥

**अज्ञायता ज्ञायता वापि यन्मया क्रियते शिवे ।**
**मम कृत्यमिदं सर्वमिति मत्वा क्षमस्व मे ॥**

इति मन्त्रेण देवीं वीक्ष्यमाणः **स्तवकवचसहस्रनामादिकं** पठित्वा, देवीं प्रदक्षिणीकृत्य, **योनिमुद्रां** प्रदर्श्य प्रोक्षणीपात्रजलं चुलुके कृत्वा,

॥ अथविसर्जनविधिः ॥

*ॐ इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थायां सुमनसावाचाकर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्नेन यत् स्मृतं यत् कृतं तत् सर्वं ब्रह्मार्पणं भवतु स्वाहा ।*

*ॐ मां मदीयं सकलसम्यक् श्रीमद्दक्षिणकालिकेश्वरचरणयो-स्समर्पणमस्तु ।*

ॐ तत्सदित्यात्मसमर्पणं कृत्वा, आवरणदेवताः देव्यङ्गे विलाप्य, संहारमुद्रया श्रीचक्रात् पुष्पं समुद्धृत्य—

**गच्छ गच्छ परं स्थानं स्वस्थानं परमेश्वरि ।**
**ब्रह्मादीनामपिदेवानां दुर्लभं परमं पदम् ।।**

इति दक्षिणनासिकया निर्माल्यपुष्पाघ्राणपूर्वकं सुषुम्णामार्गेण देवतारूपं तेजः स्वहृदि समानीय, *श्रीमद्दक्षिणकालिके पूजितासि* क्षमस्वेति देवीं विसृज्य, ऐशान्ये त्रिकोणमण्डलं विधाय, तत्र श्रीचक्रनिर्माल्येन,

ऐं *निर्माल्यवासिन्यै नमः* । इति

**चर्वणं ह्यन्नपानादि ताम्बूलं स्रग्विलेपनम् ।**
**निर्माल्यं भोजनं देवि ददामि श्रीशिवाज्ञया ।।**

इति च पुष्पाक्षतनैवेद्यादिभिः पूजयेत् ।

ततः किञ्चिन्निर्माल्यं शिरसि धार्य, लेपं ब्रह्मरध्रे संधार्य,

**ॐ गङ्गापुष्करनर्मदा स यमुना गोदावरी गोमती ।**
**गङ्गाद्वारप्रयागराजबदरीवाराणसीसिन्धुषु ।**
**तीर्थस्नानसहस्रकोटि फलदं श्रीचक्रपादोदकम् ।।**

इति पादोदकं गृहीत्वा, यथोक्तविधिना आहूतवीरैः सह पात्रवन्दनां कुर्यात् ।

।। इतिप्रधानदेवतापूजनं विसर्जनञ्च ।।

## ।। अथ पात्रवन्दना ।।

तद्विधिर्यथा—

चक्रेशः स्व दक्षे गुर्वादीन् ज्येष्ठान् स्व वामे च कनिष्ठान्, शक्तिसाधकान् यथा योग्यं युग्मान् वा, पङ्क्त्याकारेण चक्राकारेण वा, स्व-स्वासने समुपवेश्य, गुर्वादि ज्येष्ठानुक्रमेण शिवशक्तिधिया गन्धादिभिः सम्पूज्य, गुरुपात्रं गुरवे समर्पयेत् । तदभावे जले क्षिपेत् ।

ततः—

**अलिपात्रमिदं तुभ्यं दीयते पिशितैः सह ।**

**स्वीकृत्य सुभगे देवि जयं देहि रिपुं दह ।।**

इति मन्त्रेण शुद्धिसहितं **शक्तिपात्रं** शक्त्यै समर्प्य, **वीरपात्रामृतं** पूर्वं तर्पणार्थं रक्षितेनासवेन समं मेलयित्वा, तत्तत्पात्रे परिविष्टेन पूर्वरक्षितेन तादृशेन **शुद्धिखण्डेन** सह ज्येष्ठानुक्रमेण सर्वेभ्यः साधकेभ्यो हस्ताभ्यां दद्यात् ।

ततो **योगिनीपात्रमवीरायाः बलिपात्रं** कापालिकायाअभावे रुद्राय दत्त्वा, **विशेषार्घ्यामृतं** स्वपात्रे गृह्णीयात् ।

ततस्तेऽपि **सामयिका** पूजामण्डपमागत्य, पूर्वोक्तचतुरस्रादिमुद्राभिः **श्रीचक्रं** प्रणम्य, यथाधिकारं स्वस्वासने समुपविश्य, **चक्रेशदत्तशुद्धि-**सहितासवपात्रं हस्ताभ्यां सादरं गृहीत्वाऽऽधारोपरि स्थाप्य, प्राणानायम्य, ऋष्यादिकं विन्यस्य, ***वमिति धेनु***मुद्रयामृतीकृत्य, मूलेन पात्रामृतमष्ट-धाभिमन्त्र्य, स्व-स्व गुरुसम्प्रदायानुसारेणानन्दभैरवानन्दभैरवीगुर्वष्ट-देवताः सन्तर्प्य, पूर्वोक्त रीत्या तत्त्वशुद्धि कुर्य्युः ।

तदनन्तरं **चक्रेश्वरः सामयिकैस्सह पात्रवन्दनां** कुर्याद्यथा—

**श्रीमद्भैरवशेखरप्रविलसच्चन्द्रामृताप्लावितम् ।**

**क्षेत्राधीश्वरयोगिनीकुलगणैः सिद्धैः समाराधितम् ।**

**आनन्दार्णवकं महात्मकमिदं साक्षात् त्रिखण्डामृतम् ।**

**वन्दे श्रीप्रथमं कराम्बुजगतं पात्रं विशुद्धिप्रदम् ।।**

इत्यभिवन्द्यान्योन्यं च वन्दनं कृत्वा स्वहस्तकृत***त्रिखण्ड***मुद्रया पात्रं धृत्वा शुद्धिखण्डसहितदक्षिणहस्तपात्रं वामकरेण संयोज्य, हृदयसमीपे कृत्वा,

**ॐ समुद्रे मथ्यमाने तु क्षीराब्धौ सागरोत्तमे ।**

**तत्रोत्पन्नां सुधां देवीं कन्यकारूपधारिणीम् ।।१।।**

गोमूत्रसदृशाकारां फेणामृतसमुद्भवाम् ।
अष्टादशभुजैर्युक्तां नीरजायतलोचनाम् ।।२।।

आनन्दस्य शिरे जातामानन्दश्च महेश्वरः ।
तयोर्योगे भवेद् ब्रह्मा विष्णुश्च शिव एव च ।।३।।

तस्मादिमां सुधादेवीं पूर्णाऽहन्तां जुहोम्यहम् ।
इदं पवित्रममृतं पिवामि भवभेषजम् ।।४।।

पशुपाशसमुच्छेदकारकं भैरवोदितम् ।
चित्ते स्वातन्त्र्यभावत्वात्तस्यानन्दमयात्मनः ।।५।।

तन्मयत्वाच्च भावानां भावाः स्वच्छन्दकारिणः ।
सुषुम्णान्तं विकाशाय सुरसस्तेन पीयते ।।६।।

तस्मादिमां सुधां देवीं पूर्णाऽहन्तां जुहोम्यहम् ।
मन्त्रेणानेन देवेशि मूलमन्त्रेण मन्त्रवित् ।।७।।

अनाकुलमनाः कुर्यादतिपानं शनैः शनैः ।
स्वात्ममूलत्रिकोणस्थे सूर्यकोटिसमप्रभे ।।८।।

कुण्डल्याकृतिचिद्रूपे कुलद्रव्यं समन्त्रकम् ।
हिरण्यपात्रसंभूतं इदं तु परमामृतम् ।।९।।

पराहन्तामये वह्नौ जुहोमि शिवरूपधृक् ।
आज्ञां गुरूणां करुणानिधीनां मायामनुष्याकृतिविग्रहाणम् ।
श्रीकुण्डलीतुण्डचिदग्निमध्ये सुधां च वाचा समर्पयामि ।।

इतीमानि मन्त्राणि मूलं च पठित्वेष्टदेव्यै समर्प्य, नमस्कृत्य, गृह्णामि इति गुरुशक्तिसाधकेभ्यः आज्ञां प्रार्थयेत् । ते च जुषस्वेति सादरं ब्रूयुः ।

एवमेवान्येऽपि तथैवाज्ञां प्रार्थ्य, जुषैस्त्याज्ञप्ताः मूलाधारात् कुण्डलिनी-मिष्ट देवतारूपिणीमाजिह्वान्तां विभाव्य, शिवोऽहमित्यात्मानं मत्वा,

श्रीगुरुं स्मरन्तः कुलकुण्डलिनीमुखे संतर्प्य, शुद्धिखण्डं स्वीकृत्य, पात्राणि स्व-स्व पात्राधारे स्थाप्य, श्री गुरुं ध्यायेयुः ।

इति **प्रथमं** पात्रं ।

ततश्चक्रेश्वरश्चक्राद्वहिर्गत्वा, तत्रत्यजलेन स्वपृष्ठस्थजलेन वा करौ संशोध्य, पूर्ववज्जेष्ठानुक्रमेणैव परिविष्य मीनं च दत्त्वा तैस्सह द्वितीयवन्दनां कुर्याद्यथा—

**हैमं सिन्धुरसावहं दयितया दत्तं च प्रेयादिभिः ।**
**किञ्चिच्चञ्चलरक्तपङ्कजदृशा सानन्दमुद्वीक्षितम् ।**
**वामे स्वादुकरं विशुद्धिकरणं पात्रौ निधायात्मकम् ।**
**वन्दे पात्रमहं द्वितीयमधुनानन्दैकसंवर्धनम् ।।**

इत्यन्ते पात्रं स्वीकृत्य, मीनं संदश्य, मन्त्रचिन्तनं कुर्युः ।

इति **द्वितीयं** पात्रम् ।

ततः पूर्ववन्मुद्रया सह तृतीयं पात्रं परिविष्य—

**ॐ सर्वाम्नायकलाकलापकलितं कौतूहलोद्योतिकम् ।**
**चन्द्रोपेन्द्रमहेन्द्रशम्भुवरुणब्रह्मादिभिः सेवितम् ।**
**ध्यातं देवगणैः परं मुनिगणैर्मोक्षार्थिभिः सर्वदा ।**
**वन्दे पात्रमहं तृतीयमधुना स्वात्मप्रबोधक्षमम् ।।**

अत्र प्राणायामन्यासाद्याचरणं विशेषोऽन्यत् सर्वं पूर्ववत् । इति **तृतीयं** पात्रम् ।

अथ—

**मद्यं मीनरसावहं हरिहरब्रह्मादिभिः पूरितम् ।**
**मुद्रामैथुनधर्मकर्मनिरतं क्षाराम्लतिक्ताश्रयम् ।**
**आचार्याष्टकसिद्धभैरवकलान्यासेन संशोधितम् ।**
**पायात् पञ्चमकारतत्त्वसहितं पात्रं चतुर्थं नमः ।।**

अत्र मांसमीनमुद्राणां त्रयाणां दानं पानान्ते जपः कार्योऽन्यत्सर्वं पूर्ववत् ।
इति चतुर्थं वन्दनम् ।

आधारे भुजगाधिराजवलये पात्रं महीमण्डलम् ।
तत्त्वं सप्तसमुद्रवारि पिशितं चाष्टौ च दिग्दन्तिनः ।
सोऽहं भैरवमर्चयेत् प्रतिदिनं तारागणैरक्षतै-
रादित्यप्रमुखैस्सुरासुरगणैराज्ञाकरैः किङ्करैः ।।

अत्र यथेष्टमांसादीनां परिवेषणं शक्त्युच्छिष्टं च पेयमिति विशेषोऽन्यत् सर्वं पूर्ववत् ।

धर्माधर्महविर्दीप्ते आत्माग्नौ मनसा स्रुचा ।
सुषुम्णावर्त्मना तुभ्यमक्षवृत्तिर्जुहोम्यहं स्वाहा ।।

इति मन्त्रेण दृष्टिपातादिकं स्व-स्वशक्तिं चावेक्ष्यैकादशे नवमे सप्तमे एव तत्त्वोत्सर्जनात्मकं पूर्णाहुतिमनेन मन्त्रेण जुहुयात् । मन्त्रो यथा—
मूलमुच्चार्य—

ॐ प्रकाशाकाशहस्ताभ्यामवलम्ब्योमनोस्रुचा ।
धर्माधर्मकलास्नेहपूर्णाहन्तां जुहोम्यहम ।। स्वाहा

इति पञ्चमं पात्रम् ।

अथ षष्ठपात्रं परिविष्य परमान्नं च दत्त्वा,

क्षत्रं चामरभद्रपीठ परमानन्दोदयादायकम् ।
रम्यं राज्यकरं प्रियं सुखकरं साम्राज्यसायुज्यदम् ।
नाना व्याधिभवान्धकारहरणं जन्मान्तरध्वंसनम् ।
श्रीमद्भैरवभैरवी प्रियतरं पात्रं च षष्ठं नमः ।।

इति कुर्यादन्यत् पूर्ववदिति षष्ठपात्रम् ।

जाग्रत्स्वप्नसुषुप्तिकार्यपरतश्चैतन्यसाक्षिप्रदम् ।
विद्युत्भास्करवह्निचन्द्रधनुषो ज्योतिः कलाव्यापितम् ।
ईडापिङ्गलमध्यमत्रिवलया यत् कुण्डलीमध्यगम् ।
पात्रं सप्तमपूरणेन तरुणानन्दाधिकं पातु माम् ॥

अत्र मोदकानधिकमन्यत् समानमिति सप्तमं पात्रम् ।

मूढाज्ञानकदम्बकाननकठोराग्निस्वरूपं परम् ।
ज्ञानं ध्वस्तसमस्तसंशयधियापूर्वं सुधाधारया ।
भोगं मोक्षकरं सभावशकरं मूर्द्धिन ज्वलन्तीं परम् ।
देवी रक्षति संजपन्न दिनं पात्रं भजे चाष्टमम् ॥

अत्र दधिदुग्धादिदानं विशेषोऽन्यत् सर्वं पूर्ववत् । इत्यष्टमं पात्रम् ।

मन्ये ब्रह्ममयं समस्तजगतां सारं महत् शाश्वतम् ।
दुर्ज्ञेयं भवभोगचञ्चलधिया स्थूलाकृतिध्यायताम् ।
अस्माकं भवरूपतां करुणया प्राप्तं तदत्यद्भुतम् ।
तत् पात्रं नवमं पिवेच्च सततं भुक्तिञ्च मुक्तिप्रदम् ॥

अत्र नानाफलादिदानं विशेषोऽन्यत् समानम् । इति नवमं पात्रम् ।

वामे चन्द्रमुखी मुखे च मधुरं पात्रं कराम्भोरुहे ।
मूर्द्धिन श्रीगुरुचिन्तनं भगवतीध्यानास्पदं मानसे ।
जिह्वायां जपसाधनं परिणतत्कौलक्रमाभ्यासनम् ।
तत् पात्रं दशमं पिवेच्च परमं भुक्तिञ्च मुक्तिप्रदम् ॥

अत्र जिज्ञास्यपदार्थानां दानमधिकमन्यन्यत् प्रथमपात्रवदिति दशमं पात्रवन्दनम् ।

ॐ रामावामकरे सुधा च अधरे मन्त्रं जपन् मानसे ।
वीणावेणुरवं वय??द्गायन्ति लीलारसम् ।
क्रोडाकेलिकुतूहले च विमला लावण्यलीलारसम् ।
पानोल्लासविलासपूर्णसमये पात्रं च एकादशम् ।।

अत्र यथेच्छया भक्ष्यादिकं देयमन्यत् सकलं प्रथमवदित्ये**कादश-पात्रवन्दनम्** ।

एवं दृष्टिपातावधिके पाने यथाशक्ति पञ्चमाद्यन्यतमे तत्त्वोत्सर्गं विधायेष्ट देवीं ध्यायन्, स्व-स्वकल्पोक्तस्तवादिकं पठित्वा, **शान्ति-स्तवानन्दकवचानि** पठेत् ।

तेष्वादौ शान्तिस्तवो यथा—

ॐ नश्यन्तु प्रेत कूष्माण्डाः नश्यन्तु दूषका नराः ।
साधकानां शिवाः सन्तु आम्नायपरिपालिनाम् ।।१।।

जयन्ति मातरः सर्वाः जयन्ति योगिनीगणाः ।
जयन्ति सिद्धडाकिन्यो जयन्ति गुरुपङ्क्तयः ।।२।।

जयन्ति साधका सर्वे विशुद्धाः कौलिकाश्च ये ।
जयन्ति समयाचारसम्पन्ना पूजका नराः ।।३।।

नन्दन्तु अणिमासिद्धा नन्दन्तु कुलपालकाः ।
इन्द्राद्या देवतास्सर्वे तृप्यन्तु वास्तुदेवताः ।।४।।

चन्द्रसूर्यादयो देवा स्तृप्यन्तु मम भक्तितः ।
नक्षत्राणि ग्रहा योगाः करणा राशयश्च ये ।।५।।

तृप्यन्तु पितरः सर्वे मासा सम्वत्सरादयः ।
खेचराः भूचराश्चैव तृप्यन्तु मम भक्तितः ।।६।।

अन्तरिक्षचरा ये च ये चान्ये देवयोनयः ।
ते सर्वे सुखिनो यान्तु सर्पा नद्यश्च पक्षिणः ।।७।।

पशवस्तरवश्चैव पर्वताः कन्दराः गृहाः ।
ऋषयो ब्राह्मणाः सर्वे शान्तिं कुर्वन्तु मे सदा ॥८॥
तीर्थानि बहवो ये च ये चान्या पुण्यभूमयः ।
वृद्धापतिव्रता यस्याः शान्तिं कुर्वन्तु मे सदा ॥९॥
शिवं सर्वत्रमेवास्तु पुत्रदाराधनादिषु ।
राजानः सुखिनो यान्तु क्षेमं कुर्वन्तु मे सदा ॥१०॥
शुभा मे दिवसा यान्तु मित्रा नन्दन्तु मे सदा ।
साधकाः जयिनः सन्तु शिवं तिष्ठन्तु मे सदा ॥११॥
सुता मे विदिता सन्तु मित्रास्तिष्ठन्तु पूजकाः ।
ये ये पापधियः सुदूषणरताः मन्दादराः पूजने ॥१२॥
वेदाचारविमर्दनष्टहृदया भ्रष्टाश्च ये साधकाः ।
दृष्टाचक्रमपूर्वजातहृदया ये कौलिका दूषकाः ॥१३॥
ते ते यान्तु विनाशमत्र समये श्रीभैरवस्याज्ञया ।
साधकानान्तु द्वेष्टारः सदैवाम्नायदूषकाः ॥१४॥
योगिनां मुखे पान्तु तृप्तास्तत्पिशितैस्तु ताः ।
शत्रवो नाशमायान्तु मम निन्दाकराश्च ये ॥१५॥
द्वेष्टारः साधकानां च ते नश्यन्तु शिवाज्ञया—

इति यामलोक्तं श्यामारहस्यदीपिकादिधृतं शान्तिस्तोत्रं समाप्तम् ।

## ॥ अथानन्दस्तवः ॥

कुलार्णवोक्तमानन्दस्तवं विस्तरभिया न लिखितम् ।

ॐ नमाम्यहं मङ्गलयोगमुद्रां, सौन्दर्यलक्ष्म्या भुवि वैजयन्तीम् ।
श्रीसुन्दरीमिन्दुकलावतंसां, सानन्दमानन्दमयीं स्मरामि ॥१॥

श्रीसुन्दरीमिन्दुकलावतंसां, हालाभिराघूर्णित लोचनानाम् ।
अस्माकमानन्दितमानसानां, माहेश्वराणां दिवसाः प्रयान्तु ।।२।।

निधाय धारां वदने सुधानां, श्रीचक्रमभ्यर्च्य कुलक्रमेण ।
आस्वाद्य मद्यं पिशितं मृगाक्षीमालिङ्ग्य मोक्षं सुधियः प्रयान्ति ।।३।।

दिने दिने तीर्थघटोऽस्तु पूर्णो, दिने दिने सम्मिलितं द्वितीयम् ।
दिने दिने सुन्दरितर्पणं मे, दिने दिने पञ्चमसङ्गमोऽस्तु ।।४।।

आस्वादयन्तः पिशितस्य खण्डमाकण्ठपूर्णं मदिरां पिबामः ।
वामेक्षणासङ्गममादधाना भुक्तिं च मुक्तिं च नराः प्रयान्ति ।।५।।

नास्वादुलाभः पिशितस्य यस्मिन्, पञ्चाक्षरीपूर्णरतिर्न यत्र ।
न यत्र सङ्गो मृगलोचनायास्तद्दिनं दुर्दिनमेव मन्ये ।।६।।

प्रवर्तकानां सहसाथ लक्ष्मीः प्रयाति गेहेषु पदक्रमेण ।
श्रीसुन्दरीसाधकनिन्दकानामायुः क्षयं गच्छति तत् क्षणेन ।।७।।

अङ्गेषु कुष्ठं च गृहेष्वलक्ष्मीर्मलं शरीरे भवनं श्मशानम् ।
श्रीसुन्दरीसाधकनिन्दकानामायुश्च वित्तं च लयं प्रयान्ति ।।८।।

हालां पिबन् दीक्षितमन्दिरेषु, स्वपन्निशायां गणिकागृहेषु ।
गृहे-गृहे भोजनमेव कुर्वन्, बभ्रम्यते कौलिकचक्रवर्ती ।।९।।

अनन्तरं कालवशेन योऽहं भूयो भविष्यामि न मे विषादः ।
श्रीसुन्दरि त्वां सततं स्मरामि, दिनं तु तद्भैरव सो बभूव ।।१०।।

विकल्पवाटीतटसन्निविष्टा, प्रवर्तमानाः पशवो वराकाः ।
प्रविश्य हालाम्बुनिधावगाधे, भ्रमन्त्यतः स्वादितकौलमार्गी ।।११।।

उन्मूलनं पात्रविनिन्दकानामुन्मूलनं पात्रकुतूहलानाम् ।
आकर्षणं पङ्करुहेक्षणानां मैरेयपानं स्वयमाचरामि ॥१२॥
वाराणसीजह्नुसुताप्रयागकेदारतीर्थादिविलोकितानि ।
तेनैव पुण्येन जगत् पुनातु श्रीसुन्दरी चिन्तनमेव तथ्यम् ॥१३॥
आयातपातेन भवाभिलाषो जातो महानेव मम प्रयासः ।
मोक्षाय नाथस्य पदप्रसादादङ्गीकृतः सम्प्रति कौलमार्गः ॥१४॥
नान्यं भजेऽहं न तथाऽन्यमीडे नान्यं स्मरे न पुनराश्रयामि ।
तां चापि नाऽहं परमार्थभावं श्रीसुन्दरीं चेतसि विस्मरामि ॥१५॥
विलिख्य सिन्दूरमयं सुधीभिः श्रीचक्रमित्थं निशि क्लृप्तयन्त. ।
श्रीसुन्दरी चेतसि चिन्तयन्तः कृपावलोके वशयन्ति लोकान् ॥१६॥
वामे रामा रमणकुशला दक्षिणे चालिपात्रम् ।
अग्रे न्यस्तं मरिचसहितं शूकरस्योष्णशुद्धिम् ॥१७॥
स्कन्धे वीणा ललितकलिता सत्कथा सद्गुरुणां ।
कौलो मार्गः परमगहनो योगिनामप्यगम्यः ॥१८॥

वामे चन्द्रमुखी मुखे च मधुरं पात्रं कराम्भोरुहे,
मूर्द्धिन श्रीगुरुचिन्तनं भगवती ध्यानास्पदं मानसे ।
जिह्वायां जपसाधनं प्रणतिभिः कौलक्रमाभ्यासनम्,
यान्त्वन्ते नियतं पिबन्तु सततं भुक्ति च मुक्ति नरा. ॥१९॥

करे पात्रं मुखे स्तोत्रमानन्दं हृदयाम्बुजे ।
मूर्द्धिन श्रीगुरुपादाब्जस्मरणं किमतः परम् ॥२०॥

एकेन शुष्कचणकेन घटं पिबामि,
वापीं पिबामि सहसा लवणार्द्रकेन ।
आस्वादयामि यदि रोहितमुण्डखण्डं,
गङ्गां पिबामि यमुनां सह सागरेण ॥२१॥

यो देव्याः क्रमदूषका समयिनामुद्वेजकास्सद्गुरोः
द्वेष्टारः कुलयोगिनीदृढमनस्तापाकुलद्वेषिणः ।
वीरद्रव्यविनिन्दका कुलवधू वैहासिकाः पूजने
द्रोहाचारधिया पतन्तु सततं ते योगिनीनां मुखे ॥२२॥

अलिपिशितपुरन्ध्रीभोगपूजापरोहम्
बहुविधकुलमार्गारम्भसंभावितोऽहम् ।
पशुजनविमुखोऽहं भैरवीमाश्रितोऽहं
गुरुचरणरतोऽहं भैरवोऽहं शिवोऽहम् ॥२३॥

॥ इत्यानन्दस्तोत्रं समाप्तम् ॥

## ॥ अथानन्दकवचम् ॥

श्रीमहादेव उवाच—

शृणु देवि महाभागे पुण्यं कवचमुत्तमम् ।
आनन्दाख्यं महापुण्यं सर्वतीर्थफलप्रदम् ॥१॥

आनन्दकवचस्य ऋषिर्दक्षिणामूर्तिराख्यः ।
पङ्क्तिश्छन्दो देवता च त्रिपुरा परमेश्वरी ॥२॥

शीर्षं मे त्रिपुरा पातु ललाटे त्रिपुराम्बिका ।
त्रिपुरेशी केशपाशं भ्रूमध्यं पातु मालिनी ॥३॥

श्रवणं पातु चामुण्डा गण्डं पातु हरप्रिया ।
नासिकां पातु भेरुण्डा दन्तान् रक्षतु कौशिकी ॥४॥

मङ्गला पातु कण्ठदेशं भीमा रक्षतु लोचनम् ।
क्षेमङ्करी मध्यदेशं स्तनौ रक्षतु हिङ्गुलम् ।।५।।

करमूलं चर्चिका पातु कूर्परं विन्ध्यवासिनी ।
नाभिदेशं विशालाक्षी कराग्रं विश्ववन्दिता ।।६।।

करमध्यं शम्भुरामा वैष्णवी मणिबन्धनम् ।
नखान् रक्षतु रक्ताक्षी जठरं पातु भीषणा ।।७।।

अग्निज्वाला गुह्यदेशं नाडीरन्ध्रं महोदया ।
षट्चक्रं पातु भद्रा सुषुम्णां पातु भैरवी ।।८।।

चित्तं मे पातु विजया दशद्वारं प्रियंवदा ।
पृष्ठं रक्षतु माहेशी पादौ भक्तप्रियाऽवतु ।।९।।

दक्षपार्श्वं भद्रकाली वामपार्श्वं च शङ्करी ।
पातु मे सर्वगात्राणि श्रीश्रीत्रिपुरसुन्दरी ।।१०।।

इत्येतं कवचं देवि त्रिषु लोकेषु दुर्लभम् ।
राज्यदं भोगदं सौख्यप्रदं सर्वप्रदं प्रिये ।।११।।

पुत्रदं सर्वलोकानां शत्रुसञ्चयनाशनम् ।
यः पठेत् प्रातरुत्थाय चक्रमध्येऽपि यः पठेत् ।।१२।।

अवश्यं मुक्तिमाप्नोति कवचस्य प्रसादतः ।।

।। इत्यानन्दकवचं समाप्तम् ।।

ततः कुलस्तोत्रं पठित्वा दिव्यश्चेदन्तं सर्वं कृत्यं देवाग्रे एव समाप्य, पूर्वोक्तत्रिकोणाकारादिना प्रणम्य—ॐ इतः पूर्वं प्राणेति मन्त्रेणात्मसमर्पणं विधाय, श्रीपात्रमुत्तोल्य श्रीदेव्युपरि त्रिधा भ्रामयित्वा, तस्मात् किञ्चित् परामृतं श्रीचक्रे समर्प्य, श्रीपात्रमाधारोपरि निधाय, आवरण-

देवताः देव्यङ्गे विलाप्य, पूर्वोक्तरीत्या देवीं स्वहृद्यानीय, विसृज्य, **निर्माल्य वासिनीं** सम्पूज्य, तस्यै निर्माल्यादिकं समर्प्य, किञ्चिन्निर्माल्यं स्वशिरसि धार्य श्रीपात्रामृतं तृतीयांशं श्रीगुरवे द्वितीयभागं शक्त्यै अवशिष्टं तृतीयं भागं च स्वपात्रे निक्षिप्य, स्वीकृत्य, निजपात्रं भूमावधोमुखं कृत्वा, तदुपरि जलं पुष्पं च निक्षिप्य, पात्रमुत्थापयेत्,

**।। इति पात्रवन्दना ।।**

**।। अथपात्रशीतलीकरणम् ।।**

तत् पात्रस्याधोमुखकरणपतितोऽर्ध्यविन्दुभूमौ मायाबीजमुल्लिख्य, वामहस्तकनिष्ठया तन्मृदा—

**यं यं स्पृशामि पादेन यं य पश्यामि चक्षुषा ।**
**स एव दासतां यातु यदि शक्रसमो भवेत् ।।**

इति मन्त्रेण, स्वमस्तके तिलकं कुर्यात् । एवमेवान्येऽपि पात्रं शीतली कुर्य्युः ।

**चक्रेश्वरश्चेद्गुरुः** स्वपात्रं विसृज्य, पुनस्तस्मिन् किञ्चिद्विशेषार्घ्यविन्दुं निक्षिप्य, **शान्तिस्तवं** पठन् चक्रस्थसाधकान् तेनामृतेनाभिषिञ्चेदिति केषाञ्चित् सम्प्रदायः ।

विसर्जनावसरे भूपतितविन्दुना शिष्याणां मस्तकेऽपि गुरुकर्तृकतिलककरणमिति च केषाञ्चित् सम्प्रदायः,

ततो यत्र **निर्माल्यलेपने** स्वब्रह्मरन्ध्रे संधार्य, युक्तमन्त्रेण पादोदकं पीत्वा, देवीब्रह्मविष्णुशक्रसूर्यगणेशयमवरुणवायुधनदेशानेभ्यस्तथा साधकेभ्यः कुमारीभ्यश्च दत्त्वा किञ्चित् स्वयं च स्वीकृत्य, सोऽहमिति

भावयन् । वैष्णवाचारपरायणो निःसंयोगो यथा सुखं हि विहरेत् ।

अत्र स्त्रीणां नैवेद्यं न देयमिति सङ्केतः ।

॥ इतिपात्रशीतलीकरणम् ॥

एवं विशेषफलाकांक्षिभिरियं पूजा रात्रौ सदा कार्या । इयं च पूजा नित्यं क्रियमाणा उत्तमा, पर्वपर्वसु क्रियमाणा मध्यमा, प्रतिमास्येकदा क्रियमाणाऽधमा । एवं पूजनभेदेन पूजकोप्युत्तममध्यमाधमभेदं भजते ।

अत्र मासिकपूजाकल्पे **कुलाष्टम्यां** कार्या सा चाष्टमी प्रवृत्तौ शुक्ला निवृत्तौ कृष्णा ज्ञेया ।

एवमभिषेकतिथावपि पूजनमावश्यकम् ।

इयं च पूजा मुख्यपदार्थालाभेऽनुकल्पेनापि कर्तव्या । अनुकल्पेऽनुपलब्धे तत्र तद्भवं द्रव्यमर्घ्यपात्रे नियोजयेत् । **"एतत् कुलामृताभावे परतत्त्वं प्रकाशितम्"** इति । एतदनुकल्पविधानम् । मुख्या सा भे नित्यार्चन-पर्वार्चनयोर्बोध्या न वीरचक्रार्चनेऽपीति, **"शुद्ध्या तु प्रथमं पात्रं मीनेनैव द्वितीयकमि"** त्याद्युक्तत्वात् ।

अथ चात्रानुकल्पेऽसंभावितस्य भक्तस्यैवाधिकारः । संभावितस्य त्वगत्या तन्तन्मुख्याप्राप्ति विषये एव ।

अथानुकल्पस्यापि किञ्चित् कपर्दिकासाध्यत्वादत्यन्ताधमनिरालम्ब-भिक्षुभक्तेन कुलाचारं गृहं प्राप्य, ततोऽमृतं याच्य, तर्पणादिकं कार्यम् । ततोऽपि तदलाभे तस्माज्जलं गृहीत्वामृतबुद्ध्या संस्कृत्य, देवीमभ्यर्च्य, तदेव पेयमिति । अथात्रैतादृशां बिन्दुयुतपूजायां विशेषतो ब्राह्मणस्य

देवताः देव्यङ्गे विलाप्य, पूर्वोक्तरीत्या देवीं स्वहृद्यानीय, विसृज्य, **निर्माल्य वासिनीं** सम्पूज्य, तस्यै निर्माल्यादिकं समर्प्य, किञ्चिन्निर्माल्यं स्वशिरसि धार्य श्रीपात्रामृतं तृतीयांशं श्रीगुरवे द्वितीयभागं शक्त्यै अवशिष्टं तृतीयं भागं च स्वपात्रे निक्षिप्य, स्वीकृत्य, निजपात्रं भूमावधोमुखं कृत्वा, तदुपरि जलं पुष्पं च निक्षिप्य, पात्र-मुत्थापयेत्,

**।। इति पात्रवन्दना ।।**

**।। अथपात्रशीतलीकरणम् ।।**

तत् पात्रस्याधोमुखकरणपतितोऽर्ध्वविन्दुभूमौ **मायाबीजमुल्लिख्य**, वामहस्तकनिष्ठया तन्मृदा—

**यं यं स्पृशामि पादेन यं य पश्यामि चक्षुषा ।**
**स एव दासतां यातु यदि शक्रसमो भवेत् ।।**

इति मन्त्रेण, स्वमस्तके तिलकं कुर्यात् । एवमेवान्येऽपि पात्रं शीतली कुर्य्युः ।।

**चक्रेश्वरश्चेद्गुरुः** स्वपात्रं विसृज्य, पुनस्तस्मिन् किञ्चिद्विशेषार्घ्यविन्दुं निक्षिप्य, **शान्तिस्तवं** पठन् चक्रस्थसाधकान् तेनामृतेनाभिषिञ्चेदिति केषाञ्चित् सम्प्रदायः ।

विसर्जनावसरे भूपतितविन्दुना शिष्याणां मस्तकेऽपि गुरुकर्तृकतिलक-करणमिति च केषाञ्चित् सम्प्रदायः,

ततो यत्र **निर्माल्यलेपने** स्वब्रह्मरन्ध्रे संधार्य, युक्तमन्त्रेण पादोदकं पीत्वा, देवीब्रह्मविष्णुशक्रसूर्यगणेशयमवरुणवायुधनदेशानेभ्यस्तथा साध-केभ्यः कुमारीभ्यश्च दत्त्वा किञ्चित् स्वयं च स्वीकृत्य, सोऽहमिति

भावयन् । वैष्णवाचारपरायणो निःसंयोगो यथा सुखं हि विहरेत् ।

अत्र स्त्रीणां नैवेद्यं न देयमिति सङ्केतः ।

॥ इतिपात्रशीतलीकरणम् ॥

एवं विशेषफलाकांक्षिभिरियं पूजा रात्रौ सदा कार्या । इयं च पूजा नित्यं क्रियमाणा उत्तमा, पर्वपर्वसु क्रियमाणा मध्यमा, प्रतिमास्येकदा क्रियमाणाऽधमा । एवं पूजनभेदेन पूजकोप्युत्तममध्यमाधमभेदं भजते ।

अत्र मासिकपूजाकल्पे **कुलाष्टम्यां** कार्या सा चाष्टमी प्रवृत्तौ शुक्ला निवृत्तौ कृष्णा ज्ञेया ।

एवमभिषेकतिथावपि पूजनमावश्यकम् ।

इयं च पूजा मुख्यपदार्थलाभेऽनुकल्पेनापि कर्तव्या । अनुकल्पेऽनुपलब्धे तत्र तद्भवं द्रव्यमर्घ्यपात्रे नियोजयेत् । **"एतत् कुलामृताभावे परतत्त्वं प्रकाशितम्"** इति । एतदनुकल्पविधानम् । मुख्या सा भे नित्यार्चन-पर्वार्चनयोर्बोध्या न वीरचक्रार्चनेऽपीति, **"शुद्धया तु प्रथमं पात्रं मीनेनैव द्वितीयकमि"** त्याद्युक्तत्वात् ।

अथ चात्रानुकल्पेऽसंभावितस्य भक्तस्यैवाधिकारः । संभावितस्य त्वगत्या तन्तन्मुख्याप्राप्ति विषये एव ।

अथानुकल्पस्यापि किञ्चित् कपर्दिकासाध्यत्वादत्यन्ताधमनिरालम्ब-भिक्षुभक्तेन कुलाचारं गृहं प्राप्य, ततोऽमृतं याच्य, तर्पणादिकं कार्यम् । ततोऽपि तदलाभे तस्माज्जलं गृहीत्वामृतबुद्ध्या संस्कृत्य, देवीमभ्यर्च्य, तदेव पेयमिति । अथात्रैतादृशां बिन्दुयुतपूजायां विशेषतो ब्राह्मणस्य

नाधिकारोऽपितु शूद्राणामेव। हेतुमांसमीनादिकं परित्यज्यान्यत्सर्वंकर्मणि ब्राह्मणस्याप्यधिकारोऽस्तीति रहस्यम्।

**।। इतिश्रीकालीनित्यपूजाविशेषपद्धतिः समाप्त ।।**

।। श्रीगुरुचरणकमलेभ्यो नमः ।।

# परिशिष्टम्

## प्रथमम्

## पूजोपकरणानां विशदीकरणम्

### प्रातःकृत्यम्

काली सुन्दरी चेति उभावपि श्रीविद्ये । सत्यपि समाख्याभेदे अनयोर्यजनप्रक्रियायां बहुत्र साधारण्यं वर्तते, तत्त्वत ऐकात्म्यात् । अनयोर्महाविद्ययोरुपासनाकाले उपासको मनसा वाचा कर्मणा च स्वात्मनि तद्रूपतामापादयति । अथ च बाह्याभ्यन्तरेण शौचं विधाय तस्याः शुद्धविद्याया यजनं करोति । उपास्यरूपतापादनस्य बाह्याभ्यन्तरपवित्रीकरणस्य चोपक्रमो ऽनुज्झितशय्य एव किञ्च मुक्तस्वापस्साधकः प्रातः प्रभृति विदधाति ।

निद्रा परित्यागस्य सर्वैरविगीतः सर्वोत्तमः प्रशस्तः कालः ब्राह्ममुहूर्तः । यथोक्तञ्च —

**रात्रेः पश्चिमयामस्य मुहूर्तो यस्तृतीयकः ।**
**स ब्राह्म इति विज्ञेयो विहितः स प्रबोधने ।।**

परशुरामकल्पसूत्रे, श्रीक्रमे सूत्र २ भाष्ये ।

कालीपूजनावसरे साधको ब्राह्मे मुहूर्ते शय्यात्यागात् प्राङ् निद्रात्यागानन्तरं च कौलमार्गे पूज्यानां नव अष्टादश वा कुलवृक्षाणां[1] नामोच्चारणं करोति । तदनन्तरं निजशिरःस्थायां सहस्रदलपद्मकर्णिकायां शिवस्वरूपस्य निजगुरोः ध्यानेन मानसोपचारेण च पूजयति पादुकामन्त्रञ्च जपति[2] । इदं श्रीसुन्दर्याः पूजनक्रमेऽप्युपदिष्टम् । उभयोः क्रमयोः गुरुपादुकामन्त्रे न कोऽपि विशेषः । गुरुपादुकामन्त्रस्य जपसमर्पणादीनामौपचारिकक्रियायां विहितायां

---

१. कुलवृक्षाणां विवरणं परिशिष्टे द्रष्टव्यम् ।

२. ब्राह्मे मुहूर्ते ब्राह्मणो मुक्तस्वापः पापविलापाय परमशिवरूपं गुरुमभिमृष्य, प० क० सू०, श्रीक्रमे, सूत्र २, भाष्ये ।

कालीकुलपरम्परानुसारं निजगुरुं स्मरति । यथा च **श्रीविद्यारत्नाकरे** पादुकापंचकपाठविधाने ।

## कुण्डलिनीध्यानम्

कुण्डलिनी मातृकामयी चिच्छक्तिरुच्यते । मातृकावर्णा एव मन्त्रकल्पकास्सन्ति । तस्मान् मन्त्रात्मिकायाः कुण्डलिनीरूपायाश्चिच्छक्तेर्ध्यानं साधकायावश्यकर्तव्यतयानिर्दिष्टम् । अथात्र साधकोऽन्तः करणेन चिच्छक्तिं भावयेत् । भावनास्वरूपं यथा—कुण्डलिनीशक्तिः सुषुम्णापथेन षट्चक्राणां भेदनं कुर्वती, सहस्रारस्थितेन परशिवेन संपृक्ता जाता, ततश्चन्द्रमण्डलात् क्षरन्तीं माध्वीधारां पिवन्ती, पुनः स्वस्थानं यथावत् प्रत्यागतेति । श्रीविद्यायाः पूजनक्रमेऽसौ क्रमः दशधाभ्यस्यते तस्य विवरणं **परशुराम कल्पसूत्रे** चतुर्थसूत्रव्याख्यायां द्रष्टव्यम् । किन्तु कालीपूजनक्रमे अस्यां क्रियायां वैशिष्ट्यं यथा—सहस्रारे शम्भुना संयुक्तायाः माध्वीं पिवन्त्याः कुण्डलिन्याः मुख एव नवकुलगुरूणां स्थितिं कल्पयन् तेषां स्मरणं विधातव्यम्[1] । तेषां नामानि **श्यामारहस्ये** (पृ० ८) उल्लिखितानि वर्तन्ते । कुलगुरुणां स्मरणमन्तरा यागः न तथा फलाय भवति[2] ।

गुरुवन्दनानन्तरमपरा महत्त्वपूर्णा क्रियाजपासमर्पणमिति[3] । पूर्वदिनस्याजपाजपः षट्चक्रेषु सहस्रारस्थितदेवानां च क्रमेण ६००, ६०००, ६०००, ६०००, १०००, १००० संख्यया समर्प्यते । अस्य विधानमपि सामान्येन सर्वासां विद्यानां पूजनविधानप्रतिपादकेषु ग्रन्थेषु समुपलभ्यते ।

सौकर्यायास्याजपासमर्पणविधानस्य संकेत उपस्थाप्यते—

---

१. मूलादि ब्रह्मरंध्रान्तं गुणं ध्यात्वा गुरुं स्मरेत् ।

श्यामारहस्ये, पृ० ८ ।

२. कुलनाथं परित्यज्य ये शाक्ताः परसेविनः ।
तेषां शिक्षा च यागश्च अभिचाराय कल्पते ॥

तत्रैव ।

३. अजपाशब्दव्याख्या परिशिष्टे द्रष्टव्या ।

| क्र०सं० | चक्र नाम | पद्मस्य दलानि | पद्मवर्णः | मातृकाक्षराणि | देवता | जपसंख्या |
|---|---|---|---|---|---|---|
| १ | मूलाधारः | ४ | स्वर्णवत् | वशषस [४] | गणपतिः | ६०० |
| २ | स्वाधिष्ठानम् | ६ | विद्रुमवत् | वभयरल [६] | ब्रह्मा | ६००० |
| ३ | मणिपूरः | १० | नीलोत्पलवत् | डढणतथदधनपफ [१०] | विष्णुः | ६००० |
| ४ | अनाहतः | १२ | पिंगलः | कखगघङचछजझञटठ [१२] | रुद्रः | ६००० |
| ५ | विशुद्धः | १६ | धूम्रः | सम्पूर्णस्वराः (अ-अः, १६) | जीवात्मा | १००० |
| ६ | आज्ञा | २ | विद्युतपुञ्जवत् | हक्ष [२] | परमशिवः | १००० |
| ७ | ब्रह्मरंध्रम् | १००० | कर्पूराभम् नानावर्णोज्वलं वा । | ५० वर्णान्वितम् (आदिक्षान्तम्) | ब्रह्म | १००० |
| एकदिनस्याहोरात्रस्य वा श्वासनिःश्वासात्मको जपः— | | | | | | २१६०० |

अनन्तरञ्च गायत्री जाजप्यमाना भवति। एवं वाङ्मनसः संस्क्रिया शैयात्यागात्प्रागेव विधीयते।

अथ समन्त्रं भूस्पर्शनं अन्या वा नित्यक्रिया कार्या। स्नानानतरं संध्यातर्पणयोर्विधानं साम्प्रदायिकरीत्या भवेत्। वैदिकी संध्या तु यथावदेव क्रियते स्वशाखानुसारेण, परं तान्त्रिक्यां संध्यायां गायत्रीमन्त्रे च देवतानुसारं भेदो भवति। यतो हि तन्त्रेषु विभिन्नदेवानां स्वभूतः गायत्रीमन्त्र उक्तः। यथा—

| **देवतानाम** | **गायत्रीमन्त्रः** |
|---|---|
| काली | दक्षिणकालिकायै विद्महे। श्मशानवासिन्यै धीमहि। तन्नो घोरा प्रचोदयात् ॥ |
| दुर्गा | कात्यायिन्यै विद्महे । कन्यकुमारि धीमहि । तन्नो दुर्गिः प्रचोदयात् ॥ |
| लक्ष्मीः | महादेवि विद्महे । विष्णुपत्नि धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥ |
| श्रीसुन्दरी[1] | ऐं ह्लीं श्रीं कएईल ह्लीं त्रिपुरसुन्दरि विद्महे । ऐ ह्लीं श्रीं हसकल ह्लीं पीठकामनु धीमहि। ऐं ह्लीं श्रीं सकल ह्लीं तन्नः क्लिन्ने प्रचोदयात् ॥ एवमन्येषां मन्त्राः यथाग्रन्थेषूह्यम् । |

सम्प्रदायानुसारं क्रमेण देवतातर्पणं, ऋषितर्पणं, पितृतर्पणं, देवता-परिवारतर्पणं, भैरवतर्पणं, लोकपालादितर्पणं क्रियते । अत्रापि देवताभेदेन भेदो भवति । यद्यपि तर्पणस्य विधिः सामान्य एवास्ति ।

कालीक्रमे तर्पणं यथा विधीयते तथा **श्यामारहस्ये** निगदितम्—

**कुलसूर्याय देवाय त्रिरर्घ्यं तु प्रकल्प्य च ।**
**देवीं पितृनृषींश्चैव तर्पयेत् कुलवारिणा ॥**

(पृ० १६)

## पूजोपक्रमः

विहितप्रातःकृत्यः साधको यजनमन्दिरं प्रविशति । प्रवेशावसरे यागद्वारस्थान् देवान् देहलीं च पुष्पादिना पूजयति ।

यागद्वारस्य देवानां पूजने सामान्यार्घ्यजलस्यैव[2] प्रयोगः कार्यः[3] ।

---

१ श्रीविद्यारत्नाकरे पृ० ६७

२. परिशिष्टेऽयं शब्दः द्रष्टव्यः ।

३. सामान्यार्घ्येण देवेशि पूजयेद्द्वारपार्श्वयोः ॥

श्यामा र० पृ० २० ॥

तस्मात् यागमन्दिरप्रवेशात् पूर्वमेव यथाविधि सामान्यार्घ्यघटस्थापनक्रिया संपाद्यते ।

यागद्वारे गणेशक्षेत्रपालवटुकयोगिन्यः[1] क्रमश ऊर्ध्वभागे, वामे भागे दक्षिणेऽधस्ताच्च पूज्यन्ते । एकैकस्याः देवतायाः कृते यागमन्दिरनिर्माणार्थं सम्प्रदायिकरीत्या स्थानसंकेतः भवत्येव । अथ यथा निर्धारितेषु स्थलेष्वेव तत्तद्देवः पूजनीयो भवति । तत्र क्रमभेदः स्थानभेदो वा नैव कार्यः । कालिकायै प्रायश अष्टादशस्थानानि[2] प्रशस्तानि सन्ति । तेषु अन्यतमस्थाने समुचितरीत्या यागमण्डपः कल्पनीयः ।

## विजयाग्रहणं

पूजागृहे प्रविश्य साधकः हेतुरूपेण विजयाग्रहणं करोति । अस्य विशदं विवरणं मूले वर्तते । विजया हेतुः कारणं वेति कीर्तिता । स्यात् पूजनसम्पादनयोग्यतापादकहेतुतयाऽस्याः प्रतिष्ठा वर्तते । तथा चोक्तम्—

**विना हेतुकमास्वाद्य क्षोभयुक्तो महेश्वरः,**
**न पूजा मम कुर्याच्च न ध्यानं न च चिन्तनम् ।**
**तस्माद्भुक्त्वा च पीत्वा च पूजयेत् परमेश्वरीम् ।।**

श्यामारहस्यम्, पृ० २६

पुनश्च हेतुरपि द्विविधः आसवो विजया च । एतयोर्विजया श्रेष्ठतरा स्वीक्रियते । तस्मात् तस्या एव ग्रहणं प्रशस्तम्—

**संविदासवयोर्मध्ये संविदेवगरीयसी,**
**संवित् प्रयोगस्तेनेह पूजादौ साधकोत्तमैः ।**
**आनन्देन विना भ्रंशो न च तृप्यन्ति देवताः ।।**

श्यामारहस्यम्, पृ० २६

---

१ श्रीविद्यार्चनक्रमे भद्रकाली दक्षे, भैरवः वामे, लम्बोदर ऊर्ध्वं भागे, द्वारदेवतारूपेण पूज्यन्ते ।इति विशेषः ।

२. परिशिष्टे यागस्थानशब्दस्य व्याख्या द्रष्टव्या ।

तस्मात् पूजादौ विजया स्वीकारः कार्यः।

विजयायाः पत्राणि चतुर्वर्णानि लभ्यन्ते—(१) श्वेतपत्राणि (२) रक्तपत्राणि (३) पीतपत्राणि (४) कृष्णपत्राणि चेति।

पत्रवर्णानुगुणं विजयायाश्चत्वारोभेदास्सन्ति—(१) ब्राह्मणी (२) क्षत्रिया (३) वैश्या (४) शूद्रा चेति। एतास्वन्यतमाया यथारीत्या भक्षणं कार्यम्।

## स्वस्य शुद्धिः

विजयाग्रहणानन्तरं साधकः स्वस्मिन् यागयोग्यतापादनार्थमात्मानं विशोधयति तत्र दिग्बन्धनप्राणायामपूर्वकं भूतशुद्धिं करोति। देवपूजायां शौचं अपरिहार्यं भवति। न केवलं तान्त्रिकपूजादावपितु समाध्यादिना परमतत्त्वस्याराधनविधायकवेदान्तादिशास्त्रेष्वपि शौचं विहितं[1] भवति—

शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम्॥

विद्वन्मनोरंजिनी, पृ० १३१

भावशुद्धेः बहवः प्रकाराः आगमशास्त्रेषु वर्णिताः। तेषां प्रयोगोऽपि तत्तत्साधकाः कुर्वन्ति। शाक्तनये आन्तरशोधनार्थं मन्त्राणामपि प्रयोगः भवति। यथा—वाक्कायचित्तानां शोधने ॐ हुं फट् स्वाहेति मन्त्रस्य प्रयोगः भवति कालीपूजावसरे सर्वासां विद्यानां पूजावसरे वा एष मन्त्रः साधारण्येन प्रयोज्यः। साधकः स्वात्मानं देवीरूपं भावयन् देवीं पूजयति, अतो हि साधकस्य पूर्णशुद्धिरावश्यकी भवति। तस्मात् भूतशुद्धिः तत्त्वशुद्धिश्च विहिते।

---

१. शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः।

वेदान्तसारः॥

## भूतशुद्धिः

भूतशुद्धि[1]प्राणायामन्यासाः तत्त्वपदाभिधेयास्सन्ति तान्त्रिक वाङ्मये। तन्महत्त्वं यथा—

भूतशुद्धिं महेशानि न्यासं परमदुर्लभम् ।
प्राणयामं ततः कुर्यात् तत्त्वत्रयमिदं स्मृतम् ।।
तत्त्वत्रयं विना देवि सिद्धविद्यां जपेत् तु यः ।
तस्य सर्वार्थहानिः स्याज्जपं च विफलं भवेत् ।।

भूतशुद्धितन्त्रम् १/४–५

भूतपदेन क्षित्यप्तेजोवाय्वाकाशाः ग्राह्याः । भूतशुद्धिप्रक्रियायां पञ्चीकृतत्वाच्छरीरे वर्तमानानां पञ्चमहाभूतानां शुद्धिः क्रियते[2] । यद्यपि शरीराकारभूता एते पंचमहाभूताः स्वभावतः परमशुद्धास्सन्ति परन्तु शरीरस्याशुचित्वात् तस्य मूलभूते भूतेऽपि वासनादोषः कल्प्यते। तस्मात् भूतानामपि परिशोधनमुपचर्यते । यथोक्तमागमरहस्ये [भा० १, पृ० १३१]

स्वभावतः सदा शुद्धं पञ्चभूतात्मकं वपुः ।
मलमूत्रसमायुक्तं सर्वदैव महेश्वरि ।।
तस्यैव विशुद्ध्यर्थं वाय्वग्निसलिलाक्षरैः ।
शोषदाहौ तथा भस्म प्रोत्साहामृतवर्षणम् ।।
आप्लावनं च कर्तव्यं पूरककुम्भकरेचकैः ।।

मनुष्यः जानन्नजानन्नकेषां प्रत्यवायानां पापानां भाजनं भवति। ते च तस्य पञ्चभूतात्मके शरीरे वासनारूपेण तिष्ठन्ति । साधकः सर्वान् पापानेकत्रसम्भाव्य एकस्य पापपुरुषस्य भावनां स्ववामकुक्षौ

---

१. शरीराकारभूतानां भूतानां यद्विशोधनम ।
अव्यक्तब्रह्मसंपर्काद् भूतशुद्धिरियं मता ।।
आ० र०, भा० १, पृ० १३०

२. पञ्चानामपि वायूनां नास्ति शुद्धिर्वरानने ।
स्वभावतः सदाशुद्धः पंचभूतात्मकं वपुः ।।
भूतशुद्धितन्त्रम्, ११/२०–२१

करोति। अस्य पापमयपुरुषस्य पापमयानामङ्गानां वर्णनं मूलग्रन्थे द्रष्टव्या। भूतशुद्धि चिकीर्षन् साधकः अस्य पापपुरुषस्य देहस्य शोषकं वायुबीजं षोडशधाजपन् वामनासिकया च पूरकं करोति। पश्चात् कुम्भकावस्थायां चतुष्षष्ठिवारं अग्निबीजं जपन् तस्य पापपुरुषस्य देहं भस्मसात् करोति। दक्षिणनासिकया च तस्य भस्मनो रेचनं कृत्वा वरुणबीजं षोडशधाजपन् ललाटस्थचन्द्रमण्डलान् मातृकावर्णमयीं अमृतवृष्टिं भावयन् तद्भस्म क्षालयति।

पश्चाच्च स्वात्मनि दिव्यसुन्दरपुरुषस्य जन्मनः, तस्यावयवानां च उद्भावनां कुर्वन्, पृथ्वीबीजजपपूर्वकं तस्यांगानि दृढीकरोति। ततस्तस्मिन् परमात्मानमारभ्य पृथ्विपर्यन्तं प्रपञ्चं क्रमश उत्पादयति। एवं साधकस्य अन्तश्चेतः दिव्यपुरुषाकारो भवति। स च देवाराधनयोग्यो भवति।

सर्वापीयं प्रक्रिया हृदयस्थमात्मानं मूलाधारस्थया कुण्डलिन्या सह सुषुम्णामार्गेण शिरस्थाधोमुखसहस्रारस्थेन शिवेन संयोज्य, तस्मिंश्च प्रधानपर्यन्तानां चतुर्विंशतितत्त्वानां लयं कृत्वा क्रियते। क्रियासमापने पुनः सा कुण्डलिनी जीवात्मा च स्वस्थानमायातः।

भूतशुद्धेरेषा प्रक्रिया **भूतशुद्धितन्त्रस्य** सप्तदश पटले वैशद्येन वर्णितास्ति। अन्यापि प्रक्रिया जिज्ञासूनामुपकाराय कल्याणपत्रिकायाः **साधनाङ्कादाहृत्यात्रोपस्थाप्यते**—

**अथवान्यत्प्रकारेण भूतशुद्धिर्विधीयते।**
**धर्मकन्दसमुद्भूतं ज्ञाननालं सुशोभितम्॥**
**ऐश्वर्याष्टदलोपेतं परवैराग्यकर्णिकम्।**
**स्वीयहृत्कमले ध्यायेत् प्रणवेन प्रकाशितम्॥**
**कृत्वा तत्कर्णिकासंस्थं प्रदीपकलिकानिभम्।**
**जीवात्मानं हृदि ध्यात्वा मूले संचिन्त्य कुण्डलीम्।**
**सुषुम्णावर्त्मनात्मानं परमात्मनि योजयेत्॥**

**साधनाङ्कः**, पृ० २१५

अन्यापि प्रक्रिया साधककुले प्रचलिताऽस्ति । तत्र भूतशुद्ध्यवसरे साधकः मन्त्रं समुच्चरन् मन्त्रार्थं भावयति मन्त्रो यथा—

(१) ॐ मूलशृङ्गाटात् शिरसः सुषुम्णापथेन जीवशिवं परमशिवपदे योजयामि स्वाहा ।

(२) ॐ यं लिंगशरीरं शोषय शोषय स्वाहा ।

(३) ॐ रं संकोचशरीरं दह दह स्वाहा ।

(४) ॐ परमशिव सुषुम्णापथेन मूलशृङ्गाटकम् उल्लस उल्लस ज्वल ज्वल प्रज्वल प्रज्वल सोऽहं हंसः स्वाहा ।

भूतशुद्धिं विना कापि पूजा सफला न भवति, अतो हि भूतशुद्धिरवश्यमेव कर्तव्येति तान्त्रिकमनुशासनम् । यथोक्तं—

भूतशुद्धिं तथा कुर्यात् पूजायोग्यो यथा भवेत् ।

कंकालमालिनीतन्त्रम्, ४/२८

अपि च—

भूतशुद्धिं विना देवि जपहोमार्चनादिकम् ।
भवेत् तन्निष्फलं सर्वप्रकारेणाप्यनुष्ठितम् ।।

आगमरहस्यम्, पृ० १३०

## स्वप्रतिष्ठा

भूतशुद्धिं सम्पाद्य साधकः स्वस्य प्राणप्रतिष्ठां कुर्यात् । स्वात्मानं देवीरूपं भावयन्[1] समन्त्रं स्वात्मनि प्राणान् प्रतिष्ठापयति[2] । विधिस्तु मूले स्पष्ट एव ।

---

१ भूतशुद्धिं विधायेत्थं देवीरूपेण चिन्तयेत् ।

श्यामारहस्ये, पृ० ३१ ।

२. एतत् कर्म विद्यानामुपासनाक्रम एव क्रियते नान्यत्रेतिविशेषः ।

## पूजनारम्भः

आदौ कार्यस्य संकल्पः क्रियते । संकलपानन्तरं देवतापूजापूर्वकं मन्त्रजपस्य विनियोगः कार्यः । विनियोगविषये काश्मीरकेरलगौडसंप्रदायेषु शब्दयोजनायां भेदो भवति[1] । यथा—

केरलीये—देवताप्रीत्यर्थम् ।

काश्मीरे—देवतायाः प्रत्यक्षदर्शनार्थम् ।

गौडे—सर्वसिद्धयर्थमिति ।

## न्यासः

विनियोगं कृत्वा मन्त्रस्य ऋषिदेवताछन्दोबीजशक्तिकीलकानां उच्चारणं कुर्वन् क्रमशः शिरोमुखहृदयगुह्यस्थानानां पादयोः सर्वाङ्गस्य च स्पर्शं विदध्यात् । यथा—**श्यामारहस्ये**—

**ऋषिं न्यसेन्मूर्ध्निदेशे छन्दस्तु मुखपंकजे ।**
**देवतां हृदये चैव बीजन्तु गुह्यदेशके ।**
**शक्तिं तु पादयोश्चैव सर्वाङ्गे कीलकं न्यसेत् ।।**

अत्र विशेषो यथा येषां मन्त्राणां शक्तिरज्ञाता स्यात् । विनियोगे शक्तिर्नोच्चार्यमाणा स्यात् । तदा तेषां ऋष्यादिन्यासे कीलकेन पादद्वयस्य स्पर्शं कुर्यादिति ।

देवताया मूलवीजेन कराङ्गन्यासं कुर्यात् । कालीपूजने काल्याः मूलवीजेन प्रणवपूर्वकं षड्दीर्घान् संयोज्य न्यासविधानमुपन्यस्तम्[2] । तथा

---

१. अगमरहस्यम्, भा० १, श्लोक २७८

२. पुनर्हृदयादिष्वेतैर्जातियुक्तैः षडङ्गकम् ।
षड्दीर्घभावं स्वबीजैः प्रणवाद्यैस्तु विन्यसेत् ।।

कङ्कालमालिनीतन्त्रम् ४/२४

**च—ॐ क्रां ॐ क्रीं ॐ क्रूं ॐ क्रैं ॐ क्रौं ॐ क्रं ॐ क्रः** इति षड्भिरक्षरैः करन्यासमङ्गन्यासं च कुर्यात्। करन्यासे तु मंत्रोच्चारणपूर्वकं अंगुष्ठाद्यङ्गुलीनां करतलकरपृष्ठयोश्च स्पर्शः क्रियते। करन्यासे मंत्रोच्चारणपूर्वकमङ्गस्पर्शः—षट्पल्लवानामनुयोगपूर्वकः भवति। नमः, स्वाहा, वषट् हुं, वौषट्, फट्, एते षट्पल्लवाः कीर्तिताः। अथान्यदपि विधानमस्ति कालीपूजाया न्यासविषयकम्, मूलमन्त्रं खण्डत्रयेण विभज्य—प्रथमसप्ताक्षरैः **ह्लीं ह्लीं हुं हुं क्रीं क्रीं क्रीं हृदयस्य,** द्वितीयखण्डे षडक्षरैः **दक्षिणे कालिके** शिरसः, नवाक्षरैः शिखायाः स्पर्शः। एवमेव पुनः प्रथमादिखण्डेन कवचस्य स्कन्धयोः नेत्रत्रयस्य स्पर्शो भवति। एवं च अस्त्रस्य न्यासं कुर्यात् छोटिकाभिः तालत्रयेण च। अनेनैव प्रकारेण करन्यासमपि कुर्यात्—

**प्रणवं चाद्यबीजं च षड्दीर्घस्वरभावितम्।**
**कुर्यात् षडङ्गविन्यासं मूलखण्डत्रयेण वा।।**

**श्यामारहस्यम्, पृ० ४०**

**वर्णन्यासः**

ऋष्यादिन्यासानन्तरं न्यासक्रमे वर्णन्यासस्योपस्थितिर्भवति। अयञ्च प्रयोगः श्रीविद्योपासनाक्रमे निषिद्धः केवलं कालीविद्योपासनायामेव भवति। अस्य वर्णन्यासस्य द्वे परम्परे प्राप्येते—

(१) सविन्दुवर्णन्यासः।

(२) निर्विन्दुवर्णन्यासश्चः।

**कालीकङ्कालमालिन्योस्तन्त्रयोर्यथा** मतं भवति तथा निर्विन्दुवर्णन्यासः कार्यः। यथा **अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ नमो हृदि,** इत्यादि रूपेण। परन्तु **श्यामारहस्यमनुगच्छता** मूलमातृका विहित विधिमनुसरता सविन्दुवर्णन्यासः शस्तः। श्यामारहस्यकारः पूर्णानन्दः

सविन्दुन्यासे प्रमाणमपि समुपस्थापयति। तद्यथा—"**विरूपाक्षमते तु सविन्दुरेव न्यासः प्रमाणम्**" ( पृ० ४१ )।

विरूपाक्षकृते कवचेऽप्युक्तम्—

**आदि लृवर्णपर्यन्ताः हृदये मम मातृकाः।**
**एद्यान्ते ङादिचान्तश्च रक्षन्तु बाहुयुग्मके॥**
**नमो मध्यगतावर्णा मादिक्षान्तास्तथैव च।**
**सविन्दवः सदा पान्तु जंघयोरुभयोर्मम॥**

राघवभट्टाचार्योऽपि स्वस्य नित्यनैमित्तिककाम्यार्चनपद्धतौ सविन्दुवर्णन्यासस्य समर्थनं कुर्वन् विशदयति—

"**इदमत्रावधेयं, अयं सविन्दुवर्णन्यासस्तु विरूपाक्षसम्मतः।**"

१/१३ भाष्ये

एकस्मिन्नेव सम्प्रदाये विधिद्वयस्य विहितत्त्वं तयोरन्यतरस्य विकल्पेन स्वीकरणत्वं सूचयति। उक्तं हि कालीतन्त्रे—

"**सविन्दून् वा न्यसेदेतान् निर्विन्दून् वाऽथ वर्णवान्**"।

१/१३ भाष्ये

परन्तु सविन्दुनिर्विन्दुन्यासविधानयोर्वैकल्पिकत्वे सत्यपि—विरूपाक्षस्य मतमेव श्रेष्ठं गणयन्, कालीतन्त्रस्य भाष्यकारः कालीतन्त्रसम्मतं निर्विन्दुवर्णन्यासमसंगतं मत्वा सप्रमाणं सविन्दुवर्णन्यासमेव स्वीकरोति—

"**एतावता सविन्दुनिर्विन्दुकयोरिच्छाविकल्पेऽपि सविन्दुकन्यास एव शिष्टैर्व्यवह्रियते। कालीतन्त्रसम्मतस्य निर्विन्दुकन्यासस्य व्यवहारो विरलतमः। तथा च हरतत्त्वदीधितौ—"सविन्दुनिर्विन्दूभयस्य शास्त्रसिद्धत्वादिच्छाविकल्पेऽपि साम्प्रदायिकाः सविन्दुमेव न्यासं व्यवहरन्ति"। इति। (तत्रैव, पृ० १२१)**

वर्णन्यासः हृदये वामभुजे दक्षिणवामजंघयोः तत्त्वमुद्रया (दक्षिणहस्तस्यांगुष्ठानामिकाभ्यां), दक्षिणभुजे च वामहस्तस्य तत्त्वमुद्रया विधातव्यः । न्यासानां मुद्राविषये गौतमीयसंहितायाः[1] मतं द्रष्टव्यम् । तद्यथा—

मनसा वा न्यसेन्न्यासान् पुष्पेणैवाथ वा मुने ।
अङ्गुष्ठानामिकाभ्यां वा अन्यथा विफलं भवेत् ॥

भास्करराय एवं विशदति[2]—

"अन्तर्यागे मनसा, देवतागात्रे पुष्पेण । स्वगात्रे अङ्गुष्ठानामिकाभ्यां न्यसेत् ॥

**व्यापकन्यासः**

वर्णन्यासं विधाय व्यापकं मूलमन्त्रेण कुर्यात् । हरतत्त्व-दीधितिधृतनिगमकल्पलतायाः वचनं कालीतन्त्रस्य भाष्यकारेण आहृतम्—

शीर्षादिपादपर्यन्तं पादादिशीर्षकं ततः ।
कराभ्यां मार्जयेद्गात्रं व्यापकन्यास ईरितः ॥
१/१८ भाष्ये ।

इदं मार्जनं तु मूलमन्त्रमुच्चरन् कुर्यादिति सर्वैरतिरोहितम् । कालीतन्त्रे सप्तवारं व्यापकन्यासकरणस्य विधानमस्ति[3] । यद्यपि

---

१. कालीतन्त्रे पृ० १३ उद्धृतम् ।

२. तत्रैव—"केचित्तु वा शब्दान् इच्छाविकल्पार्थान् मन्यन्ते । स्वगात्रे बाह्यन्यासे मनसा न्यासस्यासंगतत्वात् इच्छाविकल्पार्थः सुष्ठुतया न प्रतिभाति । अतो भास्करायमतमेव समीचीनम् "एवमन्तः प्रविन्यस्य मनसातो बहिर्न्यसेत्" इत्यगस्त्यसंहितावचनेन—स्वदेहेऽनामयः कार्यः पुष्पेण सुरमूर्तिषु ।" इति मेरुतन्त्र वचनेन चामुमेवार्थं प्रकटयति ।"

३. सप्तधा व्यापकं कुर्याद्येन देवीमयो भवेत् ।
कालीतन्त्रम्, १/१८

मूलमातृकायां सकृत्करणमेव स्वीकृतम् । एवं व्यापकन्यासेन साधकः कालीमयो भवति[1] ।

**मातृकान्यासः**

तन्त्रेषु न्यासदृष्ट्या आदिक्षान्ताः पञ्चाशन्मातृकाः वर्गद्वये विभक्ताः सन्ति--

(१) अन्तर्मातृकान्यासः । (२) बहिर्मातृकान्यासश्च । पुनश्च बहिर्मातृकान्यासः वर्गत्रये विभक्तः—

(१) सृष्टिमातृकान्यासः । (२) स्थितिमातृकान्यासः । (३) संहारमातृकान्यासश्च ।

अस्य क्रमस्य प्रयोगः कालीकुल एव भवति । श्रीविद्योपासनायां मातृकान्यासस्य स्वरूपं किंचिद्भिन्नमेव । तच्च **श्रीविद्यारत्नाकरादिषु** ग्रन्थेषु समुपलभ्यते । काल्युपासनाक्रमे प्रथमत अन्तर्मातृकान्यासः क्रियते । अस्मिन् विधौ सर्वासां मातृकाणां मानसन्यासः षट्चक्रेषु भवति अतएवायमन्तर्मातृकान्यासः । अस्मिन् न्यासक्रमे विनियोगपूर्वकं कराङ्गन्यासं विधाय मातृकादेव्याः ध्यानपूर्वकं न्यासः क्रियते । मूलग्रन्थे अस्या अन्तर्मातृकायाः स्वरूपं स्पष्टमस्ति । अतः तन्त्रान्तरमाधारीकृत्य अत्रास्यविशदीकरणं उपस्थाप्यते । **महानिर्वाणतन्त्रेऽस्य** विवरणं यथा—

**हक्षौ भ्रूमध्यगे पद्मे कण्ठे च षोडशस्वरान् ।**
**हृदम्बुजे कादिठान्तान् विन्यस्य कुलसाधकः ।।**
**डादिकान्तान् नाभिदेशे वादिलान्तांश्च लिंगके ।**
**मूलाधारे चतुष्पत्रे वादिसान्तान् प्रविन्यसेत् ।।**

मूले च प्रत्येकमातृकादौ प्रणवस्य, अन्ते च **"नम"** इत्यस्य पल्लवस्य विधानमस्ति । यद्यपि **शाक्तप्रमोदे** मातृकाणामन्ते **नम** इति विहितम् तत्र च दीर्घस्वरा नोक्ताः । यथा—

---

१. व्यापकन्यासेन तु मूलमन्त्रोच्चारणपूर्वकं हस्ततलद्वयस्य मार्जनद्वारा सर्वेष्वेवावयवेषु मूलदेवताया अ:स्थापनादात्मनो देवतामयत्वम् सम्भावितम् । कालीतन्त्रे, १/१८ भाष्ये

**अं इं उं ऋं लृं एं ऐं ओं औं नमः इति**
**धूम्राभे षोडशदले कण्ठे न्यसेत् इति**

बहिर्मातृकान्यासः यथोक्तानामङ्गानां स्पर्शपूर्वकं क्रियते । यथा **महानिर्वाणतन्त्रे** (५/११६–१७)—

**ललाटमुखवृत्ताक्षिश्रुतिघ्राणेषु गण्डयोः ।**
**ओष्ठदन्तोत्तमाङ्गास्यदोःपत्सन्ध्यङ्गेषु च ।।**
**पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयांसयोः ।**
**ककुद्यंसे च हृत्पूर्वं पाणिपादयुगे ततः ।।**
**जठराननयोर्न्यस्येन्मातृकार्णान् यथाक्रमम् ।।**

परन्तु कालीक्रमे बहिर्मातृकायाः न्यासः सृष्टिस्थितिसंहारमातृका क्रमेण भवति । **महानिर्वाणतन्त्रे** उक्तः क्रमोऽप्रचलितः । मूलमातृकाधृत-क्रमः **शाक्तप्रमोदस्य** क्रमश्च साधारण एव प्रायेण । **शाक्तप्रमोदे** बहिर्मातृकान्यासः महानिर्वाणतन्त्रोक्तरीत्या एवोक्तः किञ्चिद्भेदेन ।

सृष्टिमातृकाविषये **शाक्तप्रोदस्य** मतं यथा—**"तन्त्रं तु विसर्गान्वितं प्रणवपुटितं वा मायालक्ष्मीबीजपूर्वं वा वाग्भवाश्रयं वा न्यस्तव्यम्"** । (पृ० १४) । किन्तु मूलमातृकाकारः बहिर्मातृकायाः प्रणवाद्यनमोन्तमातृकाणां न्यासक्रमं स्वीकरोति ।

स्थितिमातृकान्यासविषये स्थानक्रमः विधिश्च पूर्ववदेव स्यात् परं तु वर्णक्रमे भेदो भवति । तथा च डादिठान्तक्रमः प्रयोक्तव्योऽत्र । **शाक्तप्रमोदे** (पृ० १६) स्थितिमातृकान्यासक्रमः वैचित्र्यमावहति । तत्र **"टं ठं डं"** एते त्रयोवर्णा एव प्रयुक्ताः सर्वत्र न्यासस्थानेषु ।

संहारमातृकान्यासः क्षादि अपर्यन्तं भवेत् । अङ्गानां क्रमे न कोऽपि विशेषः ।

**श्रीकण्ठादिन्यासः**

अयमपि न्यासः मातृकान्यासस्यापरः प्रकारोऽस्ति । यतो हि बहिर्मातृकान्यासक्रमेणैव सर्वासां मातृकाणामुच्चारणपूर्वकं अयं न्यासः

विधीयते । किञ्च श्रीकण्ठपूर्णोदर्याद्यीनां देवतानां नामोच्चारणपूर्वकत्वात् तादृशसमाख्याकरणं श्रीकण्ठादिन्यास इति साधु । श्रीकण्ठादिदेवतानां गणना **श्यामारहस्ये** ( प्र० परि० पृ० ४४–६ ) कृता वर्तते । अस्य न्यासस्य देवताक्रम-निर्धारणे त्रयः प्रयोगपक्षाः समुपलभ्यन्ते । ते च **शारदातिलकस्य** टीकाकारेण राघवभट्टेन सम्यगालोचिताः पदार्थादर्शे ( ५.३७ भाष्ये ) तद्यथा—

**"केचित्तु पूर्णोदरीसहिताय श्रीकण्ठाय नमः इति । अन्ये तु पूर्णोदर्यै श्रीकण्ठाय च नम इत्याहुः । तदुभयमते रुद्राणां प्राधान्यमिति ते वदन्ति । पूर्णोदरी श्रीकण्ठाभ्यां नम इत्यादि । केचिदिच्छन्ति तत् पक्षत्रयमसाम्प्रदायिकम् । सहितशब्दस्यानुक्तस्य प्रथमपक्षे प्रयोगः । द्वितीयपक्षे उभयत्र चतुर्थ्यनुपपन्ना । एकत्र नम इति योगात् प्राप्यते । अन्यत्र प्रापकाभावात् । रुद्रपक्षत्रये च संयुतमित्युक्तत्वात् मातृकाया रुद्रैः । सहाव्यवधानेन संयोगो न भवति अतः साम्प्रदायिकः पक्ष एव ज्यायान् । अपेक्षितार्थद्योतनिकाकारस्तु—"श्रीकण्ठपूर्णोदर्यै नम" इति प्रयोगमाह । तदप्ययुक्तं यतो ध्याने अग्निषोमादिवत् समुच्चितयोरेव देवतात्वं प्रतीयते । अस्मिंश्च प्रयोगे देवतयोः समुच्चितत्वम् । पृथक् चतुर्थी निर्देशेनेतरेतरनिरपेक्षयोरेव तत् प्रतीतेः"** ।

एवं **"श्रीकण्ठपूर्णोदरीभ्यां नमः"** एष क्रम एव स्वीकार्यः । एष एव मूलामातृकायामपि स्वीकृतोऽस्ति ।

**षोढान्यासः**

मातृकान्यासस्थलेष्वेव षोढा न्सासः क्रियते । अयमपि न्यासः काल्या दुर्गाया वा क्रम एव प्रयुज्यते । यथोक्तं—

**इति गुप्तेन दुर्गायाः अङ्गषोढा प्रकीर्तिता ।**
**तारायाः कालिकायाश्च तन्मुख्याश्च तथापि वा ।।**

**श्यामारहस्यम् पृ० ४७**

अयं न्यासः षट्प्रकारात्मक क्रियते । तमुपस्थापयामिः श्यामा रहस्यानुसारेण—

(१) प्रथमे प्रकारे प्रणवसंपुटितमातृकां एवं मातृकासंपुटितं प्रणवं ललाटादिस्थानेषु न्यसेत् । यथा ॐ अं ॐ अं ॐ **अं नमो ललाटे** एवमन्यत्रापि । यद्यपि मूलमातृकायां शाक्तप्रमोदे च ॐ इत्यस्य स्थाने **श्रीं** इति लक्ष्मीबीजस्य प्रयोगः लभ्यते ।

(२) द्वितीये प्रकारे—कामपुटितां मातृकां एवं च मातृकापुटितं कामबीजं न्यसेत् पूर्वोक्तस्थानेषु । तद्यथा—**क्लीं अं क्लीं, अं क्लीं अं नमो ललाटे**" इत्यादि ।

(३) तृतीये प्रकारेऽपि शक्तिबीजपुटितां मातृकां मातृकापुटितं शक्तिबीजं च न्यसेत् । यथा—**स्हौः अं स्हौः, अं नमो ललाटे** इत्यादि ।

(४) चतुर्थे प्रकारे लज्जापुटितां मातृकां मातृकापुटितां लज्जां न्यसेत् यथा –**ह्रीं अं ह्रीं अं ह्रीं अं नमो ललाटे** इत्यादि ।

(५) पंचमे प्रकारे काल्याः मूलमंत्रेणपुटितां मातृकां मातृकापुटितं मूलमन्त्रं न्यसेत् ।

(६) षष्ठे प्रकारे केवलं मूलमन्त्रेणैव ललाटादिपादपर्यन्तं मातृकान्यासस्थानेषु अनुलोमविलोमक्रमेण न्यासं कृत्वा अष्टोत्तरशतेन व्यापकं कुर्यात् ।

अयं षोढान्यासस्य प्रामाणिकः विधिः ।

### तत्त्वन्यासः

शाक्तागमे आत्मा, विद्या, शिवश्चेति तत्त्वत्रयं कथितम् । एवं नामोच्चारणपूर्वकं तत्त्वन्यासः क्रियते । यथोक्तं **श्यामारहस्ये** (पृ० ४७)—

"**आत्मविद्या शिवैस्तत्त्वैस्तत्त्वन्यासं समाचरेत् ।**" अस्य विधिस्तु मूले स्पष्टीकृतः ।

### बीजमन्त्रवर्णपीठन्यासाश्च

कालीमन्त्रे प्रयुज्यमानैः बीजैः तदनंतरं मूलमन्त्रस्य समस्तैः

द्वाविंशत्यक्षरैः न्यासस्य विधानं मूलमातृकाकारेण दत्तम् । **शाक्तप्रमोदे** न्यासाः न सन्ति। मन्त्रवर्णन्यासानन्तरं यन्त्रस्यावरणेषु पूजितानां सर्वासां देवतानां न्यासं साधकः स्वशरीरे करोति । एतेषां न्यासानां विधिः मूलमातृकायां द्रष्टव्यः।

**श्यामारहस्य**मतानुसारं पीठन्यासात् पूर्वं साधकः कुलवेशं धारयेत्। तद्यथा **कुमारीतन्त्रे**—

**ततः स्त्रीवेशधारी स्यात् सिन्दूरांकितभालकः ।**
**श्रृंगारोज्ज्वलवेशाढ्यस्ताम्बूलपूरिताननः ॥**
**एवं वेशादिकं कृत्वा वनितामपि कारयेत् ।**
**पीठन्यासं ततः पश्चादाधारशक्तिपूर्वकम् ॥**

(श्या० पृ० ५४)

एवं **कुमारी तन्त्रस्य** अधोलिखितानि विधानान्यधिकृत्य महाकाल्याः पीठन्यासं साधकः सम्पादयेत् तत्र आधारशक्तयो यथा—

**प्रकृतिं कमठं चैव शेषं पृथ्वीं तथैव च ।**
**सुधाम्बुधिं मणिद्वीपं चिन्तामणिगृहं तथा ॥**
**श्मशानं पारिजातं च तन्मूले रत्नवेदिकाम् ।**

(श्या० पृ० ५५)

एवं प्रकारके आधारे मणिमयपीठन्यासं कुर्यात्—अपि च—

**तस्योपरि मणेः पीठं न्यसेत् साधकसत्तमः ।**

तत्रैव ॥

तदनन्तरं निम्नविधानेन क्रमशः न्यासं कुर्यात्—

**चतुर्दिक्षु मुनीन् देवान् शिवांश्च शवमुण्डकान् ।**
**धर्मांश्चैवाप्यधर्मांश्च पादगात्रचतुष्टये ॥**

तत्रैव ॥

पादगात्रचतुष्टयं दक्षांसमुखदक्षजघनदक्षपार्श्वादयः । तत् पश्चात्—

**हृदिकन्दं तथा पद्मं सूर्यं सोमं महेश्वरि ।**
**वैश्वानरं तथा सत्त्वं रजश्चैवतमस्तथा ॥**
**आत्मानं चैव विन्यस्य शक्तिं हृत्पद्मके न्यसेत् ॥**

इच्छा ज्ञानं क्रिया चैव कामदायिनी ।
रतीरतिप्रियानन्दा तथैव च मनोन्मनी ।।
वाग्भवं प्रथमं चोक्त्वा परायै तदनन्तरम् ।
अपरायै द्विरूपायै हेतौ वाच्यावतः परम् ।।
सदाशिवमहाप्रेतं ङेऽन्तं पद्मासनं तथा ।। तत्रैव ।।

सर्वेषामन्ते नमः इत्युच्चारणं कुर्यात् । इत्थं देहमये पीठे इष्ट देव्या ध्यानं कुर्यात्—

"अकृत्वा मानसं यागं न कुर्याद्बहिरर्चनम् ।।

अथानन्तरं महागुह्यषोढान्यासस्यापि विधानं मातृकाकारेण दत्तम् । तदनन्तरमेव प्रधानार्चनं प्रारभते ।

## मानसयागः

बाह्यार्चनात् पूर्वं कालीतारापूजनपद्धतौ मानसयागोऽत्यावश्यको भवति । यथा च मातृकायामेवोद्धृतम्—

"एवं पीठे देहमये चिन्तयेदिष्टदेवताम्" ।।

अस्य विधिः श्यामारहस्ये द्वितीये परिच्छेदे मूलमातृकायाञ्चापि विस्तरेणोपलभ्यते । मानसयागे स्नानसंध्यातर्पणन्यासध्यानपूजनजपहवनादीनां सम्पादनं भावरूपेणैव क्रियते ।

## बाह्यार्चनम्

बाह्यार्चने सर्वप्रथमं भगवत्याः कालिकाः श्रीपात्रस्य विशेषार्घ्यस्य वा स्थापनं क्रियते । विशेषार्घ्यं मद्येन पूरितं भवति, तथा च तस्मिन् मांसमीनमुद्रा-कुलकुसुमादीनामपि प्रक्षेपणं भवति, अतः श्रीपात्र-स्थापन-क्रियातः पूर्वं एतेषां कुल-द्रव्याणां शोधनमावश्यकं भवति । यतो हि अशुद्धानां असंस्कृतानाञ्च द्रव्याणां प्रयोगः पूजने न भवति[1] । अतः पूजनारम्भात् पूर्वं एतेषां शोधनं क्रियते । तत्राद्यम्—

---

१. श्यामारहस्ये पृ० ३१
पञ्चशुद्धिविहीनेन यत् कृतं न च तत् कृतम् ।
पञ्चशुद्धिं विना पूजा अभिचाराय कल्पते ।।—[ क्रमशः अपरे पृष्ठे द्रष्टव्यम् ]

## हेतुशोधनं

आदौ कारणद्रव्यस्यैव शोधनं कर्तव्यम् । तदनन्तरं सहायकद्रव्याणामपि शोधनं कुर्यात् । हेतोः शुद्धीकरणम् त्रिधा क्रियते — (१) आधारशोधनं पूजनञ्च घटस्थापनाय यन्त्ररूपाधारस्य पृथिव्यामेव निर्माणं कुर्यात् ।

निर्मितयन्त्रस्य सामान्यार्घ्यजलेनाभ्युक्षणं कृत्वा गन्धपुष्पैः आधारशक्तेः पूजनं विधाय, अस्मिन् यन्त्राधारे षट्कोणात्मकं त्रिकोणात्मकं वृत्तात्मकं वा पात्राधारं संस्थाप्य तस्याधारस्य वह्निकलाभिः पूजनं विदध्यात् ।

(२) **पात्रशोधनम्**—आधारोपरि धौतकारणपात्रस्य संस्थापनं कुर्यात् । कारणपात्रविषये द्रव्याणां विविधत्वमुक्तं तेष्वन्यतमस्य प्रयोगः यथा साध्यं भवति । यथा—स्वर्ण-रौप्य-शिला-कपाल-मृण्मय-नारिकेल शङ्ख-शुक्ति-मुक्ता निर्मितस्य कुलवृक्षाणां वा काष्ठेन निर्मितपात्रस्य प्रयोगः स्यात् । विभिन्नद्रव्यैर्निर्मितपात्राणां कल्पने फलकथनं—

**आधारे स्थापयेन्मन्त्री सौवर्णं वाथ राजतम् ।**
**कांस्यजं मृण्मयं वापि घटमव्रणशालिनम् ।।**
**सौवर्णं भोगदं प्रोक्तं राजतं मोक्षदं स्मृतम् ।**
**कांस्यं कान्तिकरं चैव मृण्मयं पुष्टिदं भवेत् ।।**

**श्यामारहस्ये** (पृ० ६९)

---

१. पूर्वपृष्ठस्य शेषांश :—

आत्मशुद्धिः स्थानशुद्धिर्मन्त्रस्य शोधनं तथा ।
द्रव्यशुद्धिर्देहशुद्धिः पञ्चशुद्धिरितीरिता ।।

२. अपि च कुलार्णवे ६।३१-२

असंस्कृता सुरा पापकलहव्याधिदुःखदा ।
आयुः श्रीकीर्तिसौभाग्यधनधान्यविनाशिनी ।।
तस्मात् संस्कृत्य विधिवत् कुलद्रव्यं ततोऽर्चयेत् ।।

एवमाधारोपरिस्थापितस्य घटस्यापि यथोक्तविधिना अक्षतादिना पूजनं विधाय घटं कारणद्रव्येण पूरयित्वा, तदुपरि चतुरस्रादि मुद्राणां यथोक्तरीत्या प्रदर्शनं कुर्यादिति पात्रशोधनम् ।

(३) **कारणशोधनम्**—यथोक्तविधिना-पञ्चीकरणं, कुम्भपूजनं तदुपरि पाशुपतमन्त्रजपं, दीपिनीमन्त्रजपं, आनन्दगायत्रीजपं, ब्रह्मार्चाभिमन्त्रणं, ब्रह्मकृष्णशुक्रशापविमोचनं, द्रव्ये तीर्थानां आवाहनं छुरिकामन्त्रजपं अमृतीकरणं, तिरस्करिणीविद्याजपं, ध्यानं, पावनं, शोषणं, दहनं, अमृतीकरणं घटोपरि सूर्यमण्डलस्य चिन्तनं वारुणमन्त्रजपं, अमृतमन्त्रजपं, आनन्दभैरवस्य भैरव्याश्च पूजनं, सुरायाश्च ध्यानं, विदध्यात् । इति कारणशोधनक्रमः ।

## शुद्ध्यादि शोधनम्

इत्थं हेतुशोधनं विधाय शुद्धिमीनमुद्राकुण्डगोलकद्रव्यादीनि पृथक्-पृथक् पात्रेषु स्थापयित्वा तेषां क्रमेण संस्कारः अभिमन्त्रणं, सकलीकरणं, संदीपनं, दिग्बन्धनं, मूलविद्यायाः जप इत्यादिभिः क्रियाभिः शोधनं विदध्यात् ।

## विशेषार्घ्यस्थापनम्

उपर्युक्तानां कुलद्रव्याणां संस्कारानन्तरं तान् यथोक्तविधिना विशोध्य घटं श्रीपात्रं वा स्थापयेत् । अर्घ्यस्थापनस्य पूजनस्य वा विधिः त्रिधा निगदिता तन्त्रेषु । तद्यथा—

(१) **आधारपूजनम्**— क–मूलाधारपूजनम् ।
ख–पात्राधारपूजनम् ।

(२) **पात्रपूजनम्**— क–पात्रशोधनम् ।
ख–तपिन्यदीनां सूर्यकलानां च पूजनम् ।

(३) **द्रव्यपूजनम्**— क–अष्टगन्धेन साकं पात्रे हेतुपूरणम् ।
ख–चन्द्रादिकलानां पूजनम् ।
ग–तीर्थावाहनमभिमन्त्रणं, मुद्राप्रदर्शनञ्चेति ।

एतत्तु मूले सुस्पष्टतया व्याख्यातं वर्तते। प्रकरणेऽस्मिन् कश्चिद्विशेषो यथा—

यथोक्त द्रव्येष्वन्यतमविनिर्मितस्य घटस्य द्रव्यानुसारेण निश्चित-कालपर्यन्तमेव प्रयोगः स्यात्। यथाहि **शक्तिसंगमतन्त्रे** कालीखण्डे (४ ४६–४९)—

| **पात्रविशेषः** | | **प्रयोगकालः** |
|---|---|---|
| ताम्रजं पात्रम् | – | चतुष्षष्टिवर्षपर्यन्तम्। |
| राजतपात्रम् | – | शतवर्षपर्यन्तम्। |
| सौवर्णं पात्रम् | – | सहस्रवर्षपर्यन्तम्। |
| स्फाटिकपात्रम् | – | दशसहस्रवर्षपर्यन्तम्। |
| खड्गश्रृङ्गजं पात्रम् | – | दशसहस्रवर्षपर्यन्तम्। |
| मारकतपात्रम् | – | लक्षवर्षपर्यन्तम्। |
| कापालपात्रम् | – | दशलक्षवर्षपर्यन्तम्। |
| मौक्तिकपात्रम् | – | विंशतिसहस्रवर्षपर्यन्तम् |

पात्रनिर्माणद्रव्यप्रयोगावसरे तेषां द्रव्याणां सम्प्रदायभेदेन निश्चितीकरणमपि वर्तते। यथा तत्रैव (४ ६०–६१)—

| **पात्रविशेषः** | | **प्रयोगकालः** |
|---|---|---|
| केरलसम्प्रदाये | – | नारिकेलपात्रं प्रयोक्तव्यम्। |
| गौडसम्प्रदाये | – | कापालपात्रं प्रयोक्तव्यम्। |
| काश्मीरसम्प्रदाये | – | स्फाटिकं पात्रं प्रयोक्तव्यमिति। |

प्रायश आद्यायाः पूजनावसरे षोडशपात्राणां प्रयोगः स्यात्। तेषां षोडशपात्राणां सूची यथा **शक्तिसंगमे** [का० ख० ४/८५–८९]—

| **पात्रविशेषः** | **प्रयोगकालः** |
|---|---|
| (१) सामान्यार्घ्यपात्रम्। | (२) विशेषार्घ्यपात्रम्। |
| (३) श्रीपीठपात्रम्। | (४) गुरुपात्रम्। |
| (५) भैरवपात्रम्। | (६) वीरपात्रम्। |

| पात्रविशेषः | प्रयोगकालः |
|---|---|
| (७) शक्तिपात्रम् । | (८) योगिनीपात्रम् । |
| (९) बलिपात्रम् । | (१०) पाद्यपात्रम् । |
| (११) आचमनीयपात्रम् । | (१२) अर्घ्यपात्रम् । |
| (१३) मधुपर्कपात्रम् । | (१४) पञ्चामृतपात्रम् । |
| (१५) स्नानपात्रम् । | (१६) प्रोक्षणीपात्रम् । |

केरलादिक्रमभेदेन पात्राणां निर्माणद्रव्यविषयेऽपि विशेषो वर्तते[1] । यथा—

| पात्रनाम | केरलक्रमे | काश्मीरक्रमे | गौडक्रमे |
|---|---|---|---|
| (१) सामान्यार्घ्य-पात्रम् | स्फाटिकम् | ताम्रजम् | शुक्तिजम् |
| (२) विशेषार्घ्य-पात्रम् | राजतम् | तुम्बीभवं, स्फाटिकं वा । | कापालपात्रम् । |
| (३) गुरुपात्रम् | सौवर्णम् | शुक्तिजम्, राजतं वा । | राजतम् । |
| (४) भैरवपात्रम् | शुक्तिजम् | कपालपात्रम् । | नारिकेलपात्रम् |
| (५) वीरपात्रम् | शंखजम् | मुनिकपाल-पात्रम् | काचभवम् |
| (६) शक्तिपात्रम् | काचभवम् | स्फाटिकम् | शर्करोद्भवम् |
| (७) योगिनीपात्रम् | कापालपात्रम् | ताम्रजम् | रत्नपात्रम् |
| (८) बलिपात्रम् | ताम्रजम् | काचभवम् | कूर्मजं पात्रम् |
| (९) पाद्यपात्रम् | — | शुक्तिजम् | — |
| (१०) आचमपात्रम् | — | शंखजम् | — |
| (११) अन्यपात्रम् | — | ताम्रजम् | — |
| (१२) भोगपात्रम् | — | शर्करोद्भवम् | — |

---

१. द्र० शक्तिसंगमतन्त्रम् (कालीखण्डम्) ११११-२०

एतदतिरिक्तं **चिदानन्दसम्प्रदायानुसारेण**[१], **आनन्दसम्प्रदायानुसारेण**[२], **सिद्धचैतन्यानुसारेण**[३], **आनन्दवीरदेवक्रमानुसारेण**[४], **पञ्चमानन्दक्रमानुसारेणापि**[५] पात्राणां भेदाः कथिताः। ते च नोक्ता अत्र अनावश्यकत्वात्।

कुलार्णवे पञ्चमोल्लासे प्रारम्भ एव पात्राणां वर्णनं सुस्पष्टतया कृतम्। तथा च पात्राणि नातिस्थूलानि नाति ह्रस्वानि च भाव्यानि।

**अतिस्थूलमतिसूक्ष्मं छिन्नं भिन्नं च वर्जयेत्।**

**कुलार्णवतन्त्रम् ५।७**

काम्यप्रयोगेषु इष्टानुकूलपात्रद्रव्याणां विधानं यथा तत्रैव—

**सुवर्णरौप्यताम्राणि सर्वसिद्धिकराणि च।**
**शान्तिके च शिलापात्रं स्तम्भने चैव मृण्मयम्॥**
**नारिकेलं च वश्ये स्यादभिचारे च कूर्मजम्।**
**शंखं ज्ञानप्रदं शक्तिर्देवीप्रीतिप्रदायिनीम्॥**
**पुण्यवृक्षजपात्राणि सर्वपापहराणि च।**

**कुलार्णवतन्त्रम् ५/८-१०**

कारणद्रव्याणामपि ग्रहणं कामनाभेदेन क्रियते। यथा तत्रैव --

**सर्वसिद्धिकरी पैष्टी गौडी भोगप्रदायिनी।**
**माध्वीमुक्तिकरी ज्ञेया सुरास्याद्देवता प्रिया॥**
**विद्याप्रदैक्षवी ज्ञेया द्राक्षीराज्यप्रदाभवेत्॥**
**तालजा स्तम्भने शस्ता खार्जूरी रिपुनाशिनी।**
**नारिकेलोद्भवा श्रीदा पानसी च शुभप्रदा॥**
**मधूकजा ज्ञानकरी माध्वीकी रोगनाशिनी॥**
**मैरेयाख्या कुलेशानि सर्वदा पापहारिणी।**

**कुलार्णवतन्त्रम् ५.३१-३४**

---

१. श० सं० का० ख० ४।९०-९२
२. तत्रैव ४।९३-९६
३. तत्रैव ४।९७-९८
४. तत्रैव ४।९८-९९
५. तत्रैव ४।१००-१०२

इत्थं च स्वसंप्रदायविहितेषु पात्रेषु स्वकामनानुसारेण कारणद्रव्यं स्थापयेदिति । पूजनविधिस्तु सामान्य एव ।

वह्न्यादिकलानां पूजनावसरेऽक्षतस्य गन्धपुष्पयोर्वा प्रयोगः कर्तव्यः । श्रीपात्रे कुलकुसुमादीनां प्रक्षेपविधिरुक्तः । अतीव गुह्यमिदं कृत्यं स्यादिति तन्त्रम्[1] । रहस्याख्येयं स्वयम्भूकुसुमादिकं द्रव्यं कालीपूजादावेव प्रयुक्तमपूर्वमुत्पादयति[2] । पूजासमाप्ति पर्यन्तं श्रीपात्रं स्वस्थानान्न चालयेत्[3] ।

**पात्रकल्पः**

विशेषार्घ्यस्थापनानन्तरं पूर्वोक्तगुर्वादि पात्राण्यपि सामान्यविशेषार्घ्यघटयोर्मध्यावकाशे चक्राकारेण स्थापयेत्[4] ।

एतेषां स्थापनकल्पः त्रिधा भवति—

(१) नवपात्रात्मको महाकल्पः ।

(२) पञ्चपात्रात्मको मध्यमकल्पः ।

(३) श्रीगुरुभैरवपात्रात्मकः कनिष्ठकल्पः ।

कल्पानामुपर्युक्तविकल्पसंख्याग्रहणेनैव यथावश्यकपात्रग्रहणमुक्तम् । इमानि पात्राणि मण्डलात्मके यन्त्रविशेषे संस्थाप्यानि । स्थापनक्रममुक्तम्—

---

१. पूर्वं तु शोधितं द्रव्यं गुप्तेनैव तु संक्षिपेत् ।

—श्यामा० र० पृ० ७४

२. अर्घ्यद्रव्यमर्घ्यपात्रे निःक्षिपेद्यत्नतः सुधीः ।
कुण्डगोलोद्भवं द्रव्यं स्वयम्भूकुसुमं तथा ।
नाक्षमो जायते देवि महामन्त्रस्य साधने ।।

—तत्रैव पृ० ७३

३. पूजासमाप्ति यावत् तावघ्र्यं न चालयेत् ।

—तत्रैव पृ० ८०

४. घटश्रीपात्रयोर्मध्ये पात्राणि स्थापयेद्बुधः ।।

—महानिर्वाणतन्त्रम् ६।४५ पूर्वार्धम् ।

गुरुपात्रं भोगपात्रं शक्तिपात्रमतः परम् ।
योगिनी वीरपात्रे च बलिपात्रमतः परम् ।।
पाद्याचमनयोः पात्रं श्रीपात्रेण नवक्रमात् । इति ।।
महानिर्वाणतन्त्रे [६।४५-८]

एकैकं पात्रं पूजनपुरःसरं[1] श्रीपात्रामृतेन पूयते शुद्धिं च निक्षिप्यते । यथोक्तं—

कलशस्थामृतेनैव त्रिभागं परिपूर्य च ।
माषप्रमाणं पात्रेषु शुद्धिखण्डं नियोजयेत् ।।
महानिर्वाणतन्त्रे [६।४७]

इत्थं गुर्वादि पात्राणि संस्थाप्य अर्घ्यपात्रस्य दक्षिणस्यां दिशि मधुपर्कपात्रं एवञ्च प्रोक्षणीपात्रं स्थापयित्वा साधकः स्वस्य पृष्ठ भागे यागस्यानाद्वर्हिदेशे वा यथा सौविध्यमनुसृत्य प्रक्षालनपात्रमपि निःक्षिपेत् ।

एतेषां महाकल्पदिपात्रस्थेन द्रव्येण गुर्वादीनां तर्पणं यथोक्त विधिना मन्त्रोच्चारपूर्वकं क्रियते । तद्यथा—

श्रीपात्रात् परमं विन्दुं गृहीत्वा शुद्धिसंयुतम् ।
आनन्दभैरवं देवं देवीं च प्रतर्पयेत् ।
गुरुमात्रामृतेनैव तर्पयेत् गुरुसंततिम् ।।
सहस्रारे निजगुरुं सपत्नीकं प्रतर्प्य च ।
वाग्भवाद्यं स्वस्वनाम्ना तद्वद्गुरुचतुष्टयम् ।
ततः स्वहृदयाम्भोजे भोगपात्रामृतेन च ।।
आद्यां कालीं तर्पयामि निजबीजपुरःसरम् ।।
स्वाहान्तेन त्रिधामन्त्री तर्पयेदिष्टदेवताम् ।।
शक्तिपात्रामृतैस्तद्वदङ्गावरणतर्पणम् ।।
योगिनीपात्रसंस्थेन सायुधां सपरीकराम् ।।
संतर्प्यकालिकामाद्यां ....... ................ ......... ।।
महानिर्वाणतन्त्रे [६।४९-५३]

---

१. सामान्यर्घ्यस्य पात्रेण विधिना पात्राणां स्थापनञ्चरेत् ।
—महा० नि० ६।४६ उ०

अस्मिंश्च तर्पणे शुद्धिखण्डेन साकं कारणद्रव्यं अङ्गुष्ठानामिकाभ्यां गृहीत्वा यथा क्रमेण गुर्वादिभ्योऽर्पयेत् ।

## तत्त्वशुद्धिः

तान्त्रिकदर्शने षट्त्रिंशत्तत्त्वानि वर्णितानि । अत्र कालीपूजनप्रकरणे साधकः भैरवपात्रस्थेन कारणेन हस्तौ संशोध्य स्वदक्षिणकरे त्रिकोणमुल्लिख्य तस्मिन् त्रिकोणे वामे दक्षिणे सम्मुखे मध्ये च शुद्धिखण्डं संस्थाप्य, मन्त्रजपपूर्वकं वामकरस्याङ्गुष्ठानामिकाभ्यां योगेन क्रमशः तानि शुद्धि-खण्डानि गृह्णीयात् । मन्त्रेषु च **शुद्धये तत्त्वानां** इति उच्चारणं कुर्यात् । ग्रहणविधिस्तु मातृकायां वर्तत एव ।

अनेन प्रकारेण यथाविधि शुद्धिग्रहणमेव तत्त्वशुद्धिपदमभिदधाति । तदनन्तरं साधकः वस्त्रेण हस्तप्रोक्षणं विधाय सर्वांगमार्जनं करोति ।

## विन्दुस्वीकारक्रिया

श्रीपात्रस्थं द्रव्यं पृथक्-पृथक् पात्रेषु गृहीत्वा यथोक्तरीत्या समन्त्रं मुखे ग्रहणमेव **विन्दुस्वीकार** इति कथ्यते । तदनन्तरं कारणद्रव्येण पूजोपकरणानि संप्रोक्ष्य साधकः बलिदानं करोति ।

## बलिदानम्

बलिदानविधौ क्रमे च नास्ति मतैक्यम् । साधकः स्वसम्प्रदायमनुसृत्य सम्पादयति । आद्यायाः पूजनप्रकरणे बलिः पञ्चदेवताभ्यो दीयते—(१) वटुकाय, (२) योगिनीभ्यः, (३) क्षेत्रपालाय, (४) गणेशाय, (५) सर्वभूतेभ्यश्च प्रधानदेवतायै पूजनानन्तरं बलिं दद्यात् । अथात्र विशेषं पश्यन्तु जिज्ञासवः । दिग्विधानं देवताभेदेन—

| दिशः<br>आधारग्रन्थनाम | प्राची | आग्नेयो | दक्षिणा | नैऋत्यम् | प्रतीची | वायव्यम्ः | उदीची | ऐशानम् | बलिनाम |
|---|---|---|---|---|---|---|---|---|---|
| कुलार्णवः (७/३०-१) | भूतबलिः | — | क्षेत्रपा०ब० | — | वटुकबलिः | — | यो० व० | — | मध्ये राजराजेश्वर-बलिः । |
| महानिर्वाणतन्त्रे (६ ५३-६२) | वटुकब० | — | यो० व० | — | क्षेत्र०ब० | — | गणेश ब० | — | सर्वभूतबलिः । |
| श्रीमदाद्यार्चन-पद्धतौ (प० क० सू० पृ० ५१७) | " | — | यो० ब० | — | " | — | " | — | स्वदक्षिणे प्रधान-देवताबलिः, स्ववामे च सर्वभूतबलिः |
| श्रीनेपालदेशीय-श्यामार्चनपद्धतौ-(तत्रैव पृ० ५१७) | — | यो० ब० | — | क्षेत्र० ब० | — | गणप० व० | प्रधान-दे० ब० | वटुक ब० | — |
| अन्यत्र[1] | — | " | — | " | — | " | सर्वभूत व० | " | — |

१. एतन्मतमपि कुलार्णवस्यैवास्ति तच्चोद्धृतं "दुर्गोपासनाकल्पद्रुमः" इति ग्रन्थे (पृ० १६३)।

कुलार्णवग्योपलब्ध संस्करणे प्रमाण श्लोकाः न दृश्यन्ते ? (द्र० प० क० सू० ५१७)

वल्यर्पणे प्रयुज्यमानमन्त्रेष्वपि कश्चिद्भेदः दृश्यते । विशेषः **महानिर्वाणतन्त्रे** (६।५६-६२), **कुलार्णवे** (७।१-३०) अपि च **परशुरामकल्पसूत्रे** (पृ० ५२५-३७) द्रष्टव्यः ।

**कुलार्णवः** विभिन्नवलिसमर्पणविषये विभिन्नाङ्गुल्यादेः प्रयोगमादिशति । यथा —

**अङ्गुष्ठानामिकाभ्यां च बटुकस्य बलिः स्मृतः ।**
**तर्जनीमध्यमानामिकाङ्गुष्ठैर्योगिनीबलिः ।**
**अङ्गुलीभिश्च सर्वाभिरुक्तो भूतबलिः प्रिये ।**
**अङ्गुष्ठतर्जनीभ्यां च क्षेत्रपालबलिर्भवेत् ।।**

(७।३१-३२)

उक्तानां बलीनां महत्त्वं कालीपूजनावसरेषु अधिकतरेण ख्यापितम् यथा—

**एवं बलिविधिः प्रोक्तः कौलिकानां कुलार्चने ।**
**अन्यथा देवता प्रीतिर्जायते न कदाचन ।।**

**महानिर्वाणतन्त्रे** (६।११८)

## पूजनं जपश्च

वटुकादि बलिदानानन्तरं क्रियमाणं कार्यं सोपचारं प्रधानदेवतायाः पूजनादिकं सविस्तरमुक्तं मूलग्रन्थे । उपचाराणां परिचयस्तु पूर्वमेव विस्तरेण दत्तः नास्ति तेषां व्याख्यायाः प्रसक्तिरत्र । अथ च यथोक्तरीत्या प्रधानदेवतायाः तस्याः परिवारदेवानां च यथाविधि यन्त्रे तत्तत्स्थानेषु पूजनं विधाय जपः क्रियते। कालीमन्त्रस्य जपकरणे रहस्यमाला आदिष्टा वर्तते । रहस्य मालायाः स्वरूपं द्वितीये परिशिष्टे द्रष्टव्यम् ।

यद्यपि तन्त्रेषु मातृकामालाया अन्यतमं महत्त्वं ख्यापितं, सा च मातृकामाला व्यावहारिक दृष्ट्यापि सर्वातिशायिनी । ऐकाग्र्यसाधनत्वात् । उक्तं च **शक्तिसंगमे** —

**मातृकामालायाः जपः सर्वत्रैव प्रशस्यते ।**

(कालीखण्डे –४।६)

अनया मालया मानसिको जप एव कर्तुं शक्यते, स च जपः सर्वोत्तमः स्मृतः पूजा विधानेषु। मणिमयीमालायाः विषये तन्त्रेषु रहस्यात्मकरीत्या देवताभेदेन अनेकानि वस्तूनि विहितानि। यथा हि—

वैष्णवे तुलसीमाला गजदन्तैर्गणेश्वरे।
त्रिपुराया जपने शस्ता इन्द्राक्षैरक्तचन्दने।।
महाशंखमयीमाला ज्ञेया नीलसरस्वती मनौ।।
नरेभाश्वोष्ट्रमुण्डानां छिन्नानां रणसंकटे।।
मालां वै कारयेद् वृत्ता महाविद्यासु साधकः।।
तदभावे स्फाटिकी स्यान्माला सर्वसमृद्धिदा।।

पुरश्चर्यार्णवः, पृ० ४३०

दशमहाविद्यानां मालामणिविषये तत्रैव—

स्वयंभूमालिका देवि भैरव्यां कालिकाविधौ।
छिन्नमस्ताविधौ देवि महाशंखास्थिमालिका।
बालायाःभुवनेश्वर्या स्फाटिकी परिकीर्तिता।।
गुञ्जामाला तु मातंग्यां धूम्रायां खरदन्तजा।
हरिद्रावलायां च कमलाक्षस्य रमाविधौ।

योगिनीतन्त्रेऽपि (२।४४-४६)

यथा—

त्रिपुरा या जपने शस्ता रुद्राक्षरक्तचन्दनैः।
श्मशानोद्भव धत्तूरबीजैर्धूमावती जपे।
करपर्वसमुद्भूतनाड्या संग्रथिता सती।
शस्तावगलामुख्याः सत्यं सत्यं महेश्वरी।।
सावित्रीं प्रजपेद्देवि करेण शिवमालया।।
सावित्री जपने शस्ता सर्वदा करमालिका।।
स्फाटिकी मौक्तिकी कौशिकी शस्तास्याच्छंख सम्भवा।।

इति।

कालिकायै च विशेषतया वर्णमाला, अस्थिमाला, दन्तमाला, अभावे स्फाटिकी विहिता वर्तते । यथा—

**महाशंखमयीमाला दन्तमाला स्वयंभुवा ।**
**वर्णमाला तथा देवि सर्वकामार्थसाधिका ।।**

**शक्तिसंगमतन्त्रे** (का० ख० पृ० १५६)

इति । परं त्वैषा माला परमा गोप्याप्यस्ति अतएव रहस्य मालेत्यभिहिता—

**महाशंखमयी माला तथा दन्ताख्यमालिका ।**
**न देया यस्य कस्यापि गोप्या तु मातृजारवत् ।।**

**शक्तिसंगमतन्त्रे** (का० ख० ४।१३)

उक्ता दन्तादिमाला न मात्रं कालिकायै अपितु तारायै, छिन्नायै चापि प्रयोक्तव्या । यथोक्तं—

**दन्ताख्यं चैव मुण्डाख्यं मत्स्यस्यापि मणिं प्रिये ।**
**नाड्यासंराथनं कार्यं त्रिशक्तिमालिका मता ।।**
**काली तारा तथा छिन्ना स्वरूपा मालिका परा ।**

**तत्रैव** (४।११-२)

उक्तानां मणिद्रव्याणां अनेका अनुकल्पा अपि कथिताः । यथा—

**मुण्डाभावे नारिकेलमुण्डाधो मणयश्च वा ।।**
**गजहरिणखड्गाख्यस्वर्णसाम्बरशृंगजा ।।**
**रौप्यजास्ताम्रजाः कांस्यसीसनागमयाश्च वै ।।**
**मुण्डरूपाश्चमणयः सर्वसिद्धिमयाः स्मृताः ।।**

**तत्रैव** (४।२१-२३)

**पुरश्चर्यार्णवे** [पृष्ठ ४३०-१] कामानां भेदेनापि मणिद्रव्यभेदः वर्णितः । तन्निदर्श्यंते—

| कामनाम | मालाद्रव्यम् | कामनाम | मालाद्रव्यम् |
|---|---|---|---|
| समस्तसिद्धिः | रुद्राक्षः । | पुरुषवशीकरणम् | दार्वी । |
| धनम् | मणिः । | ज्वरहरणम् | लाक्षा । |
| गतप्राप्तिः | शंखः । | पितृतर्पणम् | खड्गश्रृङ्गम् । |
| भोगः | स्फटिकः । | उच्चाटनम् | मंदारम् । |
| पुत्रः | पुत्रजीवकम् । | ज्ञानसाधनम् | श्रीफलम् |
| पुष्टिः | पद्माक्षः । | सर्वार्थसिद्धिः | गजदन्तः । |
| वशीकरणम् | प्रवालम् । | मोहनम् | ताम्रजम् । |
| मुक्तिः | मुक्ता । | मारणम् | आयसम् । |
| पापनाशः | कुशमयः । | धनम् | श्वेतपद्माक्षः । |
| कामदायकः | स्वर्णम् । | विषशमनम् | चन्दनम् । |
| कामवृद्धिः | तारजातम् । | शान्तिः | श्वेतकाष्ठम् । |
| गतपदम् | इन्द्राक्षः । | यक्षिणीसिद्धिः | रक्तचन्दनबीजम् । |
| स्त्रीवशीकरणम् | हरिद्रा । | तुष्टिः | पद्मकाष्ठम् । |
| रोगनाशः | देवदारुः । | वन्यसिद्धिः | ऋक्षास्थिः । |
| तामसंकर्म | कृष्णकाष्ठम् । | वनदेवतासिद्धिः | सिंहास्थि । |
| भूतस्तम्भनम् | निम्बकाष्ठम् । | राक्षससिद्धिः | नरास्थि । |
| जनस्तम्भनम् | शमीकाम्ठम् । | वीरसाधनम् | हयास्थि । |
| डाकिनीस्तम्भनम् | महानिम्बकाष्ठम् । | क्षुद्रसिद्धिः | रासभास्थि । |
| रोगस्तम्भनम् | भूनिम्बमाष्ठम् । | मान्यताप्राप्तिः | गजास्थि । |
| रणस्तम्भनम् | इन्द्रवृक्षः । | शाबरसिद्धिः | भृष्टमृत्तिकामणि- |
| अभिचारः | वानरास्थि । | — | मयीमाला । |

भृष्टं जलोपसेकं विना वालुकाग्नि संयोगेन पक्वम् । एवमेव देवताभेदेन सूत्रभेदोऽपि कथितः । यथा—

"देव्या रक्तपट्टसूत्रम् । शिवस्योर्णाभवं श्वेतं वा वल्कलं वा । सूर्यगणेशयोः कार्पासजम् । तच्च सुवासिन्या ब्राह्मण्या कर्तितम् । स्वसमानजातीय योषित् कर्तितं वा । त्रिगुणं त्रिगुणी कृतम् । यत्र ब्राह्मणी कर्तितं न मिलति तत्र वर्णान्तरीय केवल सुवासिनी कर्तितं ग्राह्यम् । अन्येषु सूत्रेषु स्वेच्छिक गुणस्थौल्यं मानं च ।"

श्रीविद्यारत्नाकरे (पृ० २५४)

जपस्य भेदाः द्वितीये परिशिष्टे द्रष्टव्याः जपशब्दव्याख्यायाम् ।

## पूजाङ्गहोमः

जपानन्तरं पूजाङ्गहोमः क्रियते । अत्र देवताभेदेन मन्त्र भेदो वर्तते, किन्तु स्थण्डिलादि निर्माणं सामान्यमेवास्ति । तथापि कुण्डस्थण्डिलादीनामाकारे आहुतिसंख्या भेदेन न्यूनाधिक्यमपि स्यात् । कुण्डादिनिर्माणविषये पंक्तयः प्रमाणस्वरूपेण समुपस्थाप्यन्तेऽत्र—

"तत्र एकोनपञ्चाशत् संख्याकाहुतिपर्यन्तं स्थण्डिलमेव । तच्च अष्टादशाङ्गुलप्रमाणं परितः अङ्गुष्ठोन्नतम् । अग्रे कुण्डेन सह विकल्पो शक्तिशक्तिभ्यां व्यवस्थिति । पंचाशदादि नवनवति संख्याहुतिपर्यन्तं मुष्टिमात्रम् । मुष्टिः अरत्निः । शतादिनवनवत्यधिकनवशत्याहुति पर्यन्तं अरत्निमितम् । निष्कनिष्ठमुष्टिहस्तो रत्निः । सहस्रादि होमे हस्तमात्रम् । अयुतादौ द्विहस्तम् । लक्षादौ चतुर्हस्तम् । दशलक्षादौ षड्ढस्तम् । कोटि होमादौ अष्टहस्तं दशहस्तं वा । चतुर्विशत्यंगुलैः हस्तः । अङ्गुलं तु तिर्यङ्निहिताष्टयवप्रमाणं स्वमध्यमा मध्यारमितं वा ज्ञेयम् । मुष्ट्या वा चतुरङ्गुलानि । अर्धयवोनचतुस्त्रिंशताङ्गुलैः द्विहस्तम् । सार्धैकचत्वारिंशतात्रिहस्तम् । अष्टचत्वारिंशता चतुर्हस्तम् । पादोन चतुः पंचाशता पञ्चहस्तम् । पादोनैकोनषष्ट्या षड्ढस्तम् । सार्धत्रिषष्ट्या सप्तहस्तम् । अष्टषष्ट्या यवोनया अष्टहस्तम् । द्विसप्तत्या नवहस्तम् । षट्सप्तत्या दशहस्तं कुण्डं स्थडिलं वा भवति कुण्डाङ्गानां व्यासखातनाभिकण्ठमेखलायोनीनां सम्यज्ज्ञान एव कुण्डं युक्तम् ।

"अन्यथा अत्यन्तमनिष्टम् । स्थण्डिलं चतुरस्रमङ्गुलोत्सेधं वा । स्थूलद्रव्यहोमे तत्तत्परिमाणस्यापर्याप्तौ स्वोत्तरपरिमाणमपि ग्राह्यम् ।" इति । श्रीविद्यारत्नाकरस्य (पृ० ४५७-८)

अस्यपूजाङ्गभूतस्य हवनस्यावश्यकरणे विद्वांसः विप्रतिपत्तिं प्रदर्शयन्ति[1] । किन्तु महानिर्वाणतन्त्रे स्वयं भगवता शिवेनैवास्य समर्थनं कृतम् । अतोहि महानिर्वाणतन्त्रीयो विधिरत्र युक्तः । तथाहि —

ततो होमं प्रकुर्वीत तद्विधानं शृणु प्रिये ।
स्वदक्षिणे बालुकाभिर्मण्डलं चतुरस्रकम् ।।
चतुर्हस्तपरिमितं कृत्वा मूलेन वीक्षणम् ।
अस्त्रेण ताडयित्वा च तेनैव प्रोक्षणं चरेत् ।
कूर्चबीजेऽवगुण्ठ्य देवतानामपूर्वकम् ।।
"स्थंडिलाय नम" इति यजेत् साधकसत्तमः ।
प्रागग्रा उदगग्राश्च रेखाः प्रादेशसम्मिताः ।।
तिस्रस्तिस्रो विधातव्यास्तत्र संपूज येदिमान् ।
प्रागग्रासु च रेखासु मुकुन्देशपुरं दरान् ।
ब्रह्मवैवस्वतेन्दूंश्च उत्तराग्रासु पूजयेत् ।।
ततः स्थंडिलमध्ये तु ह्सौः गर्भत्रिकोणकम् ।
षट्कोणं तद्बहिर्वृत्तं ततोऽष्टदलपंकजम् ।
भूपुरं तद्बहिर्विद्वान् लिखेद्यन्त्रमुत्तमम् ।।
मूलेन पुष्पाञ्जलिना सम्पूज्य प्रणवेन तु ।।
होमद्रव्याणि संप्रोक्ष्य कर्णिकायां यजेत् सुधीः ।।
मायामाधारशक्त्यादीन्[2] प्रत्येकं वा प्रपूजयेत् ।
अग्न्यादिकोणे धर्मं च ज्ञानं वैराग्यमेव च ।
ऐश्वर्यं पूजयित्वा तु पूर्वादिषु दिशां क्रमात् ।।
अधर्ममज्ञानमिति अवैराग्यमनन्तरम् ।।

---

१ द्र०—प० क० सू०, पृ० ४९९५-५०० ।

२ 'ह्रीमाधारशक्त्यै नम' इति मन्त्रेण गन्धपुष्पादिभिः पूजयेदित्यर्थः ।

अनैश्वर्यं यजेन्मन्त्री मध्येऽनन्तस्य पद्मकम् ।
कलासहितसूर्यस्य तथासोमस्य मण्डलम् ॥
प्रागादिकेशरेष्वेषु मध्ये चैताः प्रपूजयेत् ।
पीताश्वेतारुणा कृष्णा धूम्रा तीव्रा तथैव च ॥
स्फुलिंगिनी च रुधिरा ज्वलनीति तथा क्रमात् ।
प्रणवादि नमोऽन्तेन[1] सर्वत्र पूजनं चरेत् ।
रं वह्नेरासनायेति नमोऽन्तेन[2] प्रपूजयेत् ॥
व गीश्वरीमृतुस्नातां नालेन्दीवरलोचनाम् ।
वागीश्वरेण संयुक्तां ध्यात्वा मन्त्री तदासने ।
माययाऽतो प्रपूज्याथ विधिवद्वह्निमानयेत् ॥
मूलेन वीक्षणं कृत्वा पटावाहनमाचरेत् ॥
प्रणवं च ततो वह्नेर्योगपीठाय हुं मनुम् ।
यन्त्रे पीठं पूजयित्वा दिक्ष्वेताः प्रपूजयेत् ॥
वामा ज्येष्ठा तथा रौद्री अम्बिकेति यथाक्रमात् ॥
ततो मुख्या देवतायाः स्थडिलाय नमः पदम् ॥
इति स्थडिलमापूज्य तन्मध्येमूलरूपिणीम् ॥
ध्यात्वा वागीश्वरीं देवीं वह्निवीजपुरःसरम् ।
वह्निमुद्धृत्य कूलान्ते कूर्चमन्त्रं[4] समुच्चरन् ।
क्रव्यादिभ्यो वह्निजायां[5] क्रव्यादंशं परित्यजेत् ।
अस्त्रेण वह्निं संवीक्ष्य कूर्चेनैवावगुण्ठयेत्[6] ॥

---

१. ॐ पीतायै नम इत्यादि ।

२. रं वह्नेरासनाय नम इत्यासनपूजनम् ।

३. नम इति ।

४. हुं फट् इति ।

५. स्वाहेति । ह्रीं श्रीं क्लीं परमेश्वरि हुं फट् क्रव्यादिभ्यः स्वाहा इति मन्त्रो जातः । अनेनैव मन्त्रेण वह्नौ ज्वलद्दाहकरूपं क्रव्यादांशे राक्षसभागे दक्षिणस्यां दिशि परित्यजेदिति ।

६. वह्निं वेष्टयेदिति ।

धेन्वा चामृतीकृत्य हस्ताभ्यामग्निमुद्धरेत् ।
प्रादक्षिण्यक्रमेणाग्निं भ्रामयन् स्थण्डिलोपरि ।।
त्रिधा जानुमुपस्पृष्टभूमिः शिवबीजं[1] विचिन्तयन् ।
आत्मनोऽभिमुखीकृत्य योनियन्त्रे[2] नियोजयेत् ।।
ततो मायां समुच्चार्य वह्निमूर्तिञ्च ङेयुताम्[3] ।।
नमोऽन्तेन प्रपूज्याथ रं वह्निपरतः सुधीः ।।
चैतन्याय नमो वह्नेश्चैतन्यं परिपूजयेत् ।
नमसा वह्निमूर्तिञ्च चैतन्यं परिकल्प्य च ।।
प्रज्वालयेत् ततो वह्निमन्त्रेणानेन मन्त्रवित् ।।

महानिर्वाणतन्त्रम् (६।११६-१६ )

तत्र वह्निमन्त्रो यथा—

ॐ चित्पिंगल हन-हन दह-दह पच पच सर्वाज्ञा ज्ञापय स्वाहा ।।
ततः कताञ्जलिर्भूत्वा प्रकुर्यादग्निवन्दनम् ।।

तत्रैव, (६।१४१-१४२)

वन्दनामन्त्रो यथा—

अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।।
सुवर्णममलं चैव समिद्धं सर्वतोमुखम् ।।
इत्युपस्थाप्य दहनं छादयेत् स्थंडिलं बुधैः ।
स्वेष्टनाम्ना वह्निनाम कृत्वाप्यर्चनमाचरेत् ।।

मन्त्रो यथा—

ॐ वैश्वानर जातवेद इहावहावह लोहिताक्ष सर्वकर्माणिसाधय स्वाहा ।

तत्रैव (६।१४५-१४६)

---

१. शिवस्यवीर्यरूपं वह्निमित्यर्थः ।

२. त्रिकोणयन्त्रमिति ।

३. ह्रीं वह्निमूर्तये नम इति मन्त्रो जातः ।

इत्यभ्यर्च्य हिरण्यादि[1] सप्तजिह्वाः प्रपूजयेत् ।
सहस्रार्चिपदं ङेऽन्तं हृदयाय नमो वदेत् ।।
षडङ्गं[2] पूजयेद्वह्नेस्ततो मूर्तियजेत् सुधीः ।
जातवेदप्रभृतयो[3] मूर्तयोऽष्टौ प्रकीर्तिताः ।।
ततो यजेदष्टशक्तीर्ब्राह्म्याद्यास्तदनन्तरम्[4] ।
पद्माद्यष्टनिधीनिष्ट्वा[5] यजेदिन्द्रादिदिक्पतीन् ।।
वज्राद्यस्त्राणि सम्पूज्य प्रादेशपरिमाणकम् ।।
कुशपत्रद्वयं नीत्वा घृतमध्ये निधापयेत् ।।
वामे ध्यायेदिडां नाडीं दक्षिणे पिंगलान्तथा ।।
मध्ये सुषुम्नां संचिन्त्य दक्षभागसमाहितः ।।
आज्यं गृहीत्वामतिमान् दक्षनेत्रे हुताशितुः ।।
मन्त्रेणानेन जुहुयात् ................. .. ......... ... ।

मन्त्रो यथा .................. ॐ अग्नये स्वाहेति ।

.............................. वामभागाद्विर्हरेत् ।
वामनेत्रे हुनेद्वह्नेरों सोमाय द्विठो[6] मनुः ।।

---

१. वह्निजिह्वाः यथा—हिरण्या, गगना, रक्ता, कृष्णा, सुप्रभा, बहुरूपा, अतिरक्तेति ।

२. षडंगो यथा—सहस्रार्चिषे हृदयाय नमः, स्वस्तिपूर्णाय शिरसे स्वाहा, उत्तिष्ठपुरुषाय शिखायै वषट्, धूम्रव्यापिने कवचाय हुं, सप्तजिह्वाय नेत्रत्रयाय वौषट् । स्वाहेति सर्वत्रयोज्या ।

३. वह्निमूर्तयो यथा—जातवेदः, सप्तजिह्वः हव्यवाहनः, अश्वोदरजः, वैश्वानरः, कौमारतेजः, विश्वमुखः, देवमुखः ।

४. ब्राह्मी, माहेश्वरी, कौमारी, वैष्णवी, वाराही, इन्द्राणी, चामुण्डा, महालक्ष्मी ।

५. पद्माद्यष्टनिधिभ्यः स्वाहा ।

६. स्वाहा इति ।

मध्यादाज्यं समानीय ललाटे हवनं चरेत् ।।
अग्निषोमौ सप्रणवौ तूर्यं द्वि वचनान्वितौ ।।
स्वाहान्तोऽयं[1] मनुः प्रोक्तः पुनर्दक्षिणगतो हविः ।।
गृहीत्वा नमसा मन्त्री प्रणवं पूर्वमुद्धरेत् ।।
अग्नये च स्विष्टकृते वह्निकान्तां ततो[2] वदेत् ।।
अनेन वह्नि वदने जुहुयात् साधकोत्तमः ।।
भूर्भुवः द्विठान्तेन[3] व्याहृत्या होममाचरेत् ।।

तत्र वह्न्याहुति मन्त्रो यथा—

ॐ वैश्वानर जातवेद इहावहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहेति ।

तत्रैव (७।१५६-७)

............................विधानेनाहुतीर्हरेत् ।।
ततोऽग्नौ स्वेष्टमावाह्य पीठाद्यैः सह पूजनम् ।।
कृत्वा स्वाहान्त मनुना मूलेन पंचविंशतीः ।
हुत्वा वह्न्यात्मनोर्देव्या ऐक्यं सम्भावयन् धिया ।।
एकादशाहुतीर्हुत्वा मूलेनैवाङ्ग देवताः ।
हुत्वा स्वकाममुद्दिश्य तिलाज्यमधुमिश्रितैः ।।
पुष्पैर्विल्व पत्रैर्वापि यथाविहितवस्तुभिः ।।
यथाशक्त्याहुतिं दद्यान्नाष्टन्यूनां प्रकल्पयेत् ।।
ततः पूर्णाहुतिर्दद्यात् फलपत्रसमन्वितम् ।।
स्वाहान्तमूलमन्त्रेण ततः संहारमुद्रया ।।
तस्माद्देवीं समानीय स्थापयेत् हृदयाम्बुजे ।।
क्षमस्वेति च मन्त्रेण विसृजेत्तं हुताशनम् ।।
कृतदक्षिणको मन्त्री अच्छिद्रमवधारयेत् ।।

---

१. अग्निषोमाभ्यां स्वाहा ।

२. स्वाहेति ।

३. स्वाहेति ।

हेतुशेषं भ्रुवोर्मध्ये धारयेत् साधकोत्तमः ।।
एष होमविधिः प्रोक्तः सर्वत्रागमकर्मणि ।।

इति होमविधिः ।

## विसर्जनं पात्रवन्दना च

एवं होमानन्तरं भगवत्याः आद्यायाः यथासम्मतं-स्तोत्रकवचसहस्त्र-नामादिकं पठेत्। तदनन्तरं च साङ्गावरणादिकां देवतां विसृज्य सह कौलिकगणैः पात्रवन्दनां विदध्यात् ।

यद्यप्यस्याः पात्रवन्दनायाः विधिः मूलमातृकायां सविस्तरेणोल्लिखितोऽस्ति, तथापि तत् सम्वद्धाः केचन विशेषा अत्र समुपस्थाप्यन्ते ।

कौलाचारस्यास्यां पात्रवन्दनायां सम्मिलितानां साधकानां कृते कौलाचारस्य दीक्षापरमावश्यक्यस्ति। अस्मिन् रहस्यात्मके कर्मणि तदनु‥कूलात्मनः स्थितिः जितेन्द्रियता चापरिहार्या । अस्मिन् विषये कुलार्णवः आदिशति यददीक्षितं, अनाचारं अतन्त्रज्ञं, अदैवतं, कौलकर्मदूषकं, आचारभ्रष्टं, पण्डितम्मन्यमानं, प्रपञ्चीं, अनावश्यकपानरतं पशु इति संज्ञितं वा, क्षुद्रकर्मकरं, स्त्रीद्वेषिणं, गुरुशप्तं, भक्तिहीनं, कुलोपदेशरहितं पुरुषं पात्रपानक्रियायां न मेलयेत्। अपि च तदनुसारेण तु पदवाक्यप्रमाणज्ञाः श्रुतिस्मृत्यर्थज्ञाः, सत्कुलोत्पन्नाः, सदाचाराः, वृद्धाः, स्वस्निग्धस्त्रींपुत्रबान्धवाश्चापि कुलाचारविहीनाः पात्रवन्दनाक्रियायां अर्हाः न सन्ति[1] । एवञ्चादृष्टपूर्वपुरुषाः देशान्तरनिवासिनोऽपि न योजनीयाः[2] । मात्रपूर्णाभिषिक्ता एव साधकाः पात्रवन्दनां कर्तुमर्हाः[3] ।

अत्र पात्रवन्दनावसरे लोकमर्यादाया अपि निर्वहणं कुर्यात्। यथोक्तं कुलार्णवे एव--

---

१. कुलार्णवतन्त्रम्, ८।११-१३ ।

२. तत्रैव, ८।१४ ।

३. तत्रैव, ७।८१ ।

**श्रीगुरुज्येष्ठपूज्यानां पुरतः कुलनायिके ।**
**नोपविश्यपिवेन्मद्यं इति शास्त्रस्य निर्णयः ।।**

**कुलार्णवतन्त्रम् (७।८१)**

उपर्युक्तेनानुशासनेनातिरोहितमिदं यद्धेतुः साधारणपानवन्नास्ति । अपितु तान्त्रिकरीत्या मूलाधारस्थायाः कुण्डलिन्याः मुखे हवनस्य प्रक्रियास्ति । यस्यां क्रियायां साधकः अहंतापात्रे इदंतामद्यं प्रपूर्य पराहन्तावह्नौ जुहोति[1] । इत्थं च सः गुरुदेवतामन्त्रात्मनोरैक्यं भावयति[2] ।

तान्त्रिकपरम्परायां पात्रवन्दानायाः विधानं चतुष्षष्टिपात्रपर्यन्तं प्राप्यते परं तु तत्रापि स्वशक्त्यनुसारेण पानं कर्तव्यम् । यथोक्तं—

**यावन्नेन्द्रियवैकल्यं यावन्नो मुखवैकृतिम् ।**
**तावदेव पिवेन्मद्यमन्यथा पतनं भवेत् ।।**

**कुलार्णवतन्त्रम् (७।९८)**

स्वोच्छिष्टं पानद्रव्यं स्वशिष्याणां कनिष्ठानामेव दद्यात् नान्येभ्यः ।

अत्रायं विशेषोऽवगन्तव्यो यत् पात्रवन्दनावसरे जातिभेदो न स्यात् यथोक्तम्,—

**स्त्रीवाथ पुरुषः षण्डश्चाण्डालो वा द्विजोत्तमः ।।**
**चक्रेऽस्मिन् नैव भेदोऽस्ति सर्वे शिवसमाः स्मृताः ।।**

**तत्रैव (८।९७)**

---

१. स्वात्ममूलत्रिकोणस्थे कोटिसूर्यसमप्रभे ।
कुण्डल्याकृति चिद्रूपे हुनेद्द्रव्यं समन्त्रकम् ।।
अहंता पात्रभरितमिदन्तापरमामृतम् ।
पराहन्ता मये वह्नौ होमस्वीकारलक्षणम् ।।
कुलार्णवः, ७।८८-९ तु० महानिर्वाणतन्त्रम् ६।१९२-३

२. गुरुदेवतमन्त्राणामैक्यं संचिन्तयेद्धिया ।।—कुलार्णवः ७।९०

अपि च--

क्षीरेण सहितं तोयं क्षीरमेव यथाभवेत् ।
तथा श्रीचक्रमध्ये तु जातिभेदो न विद्यते ।।

तत्रैव ७।९९

अत्र श्रीचक्रे स्त्रीपुरुषाणां स्थानविषयेऽपि विधानविशेषोऽस्ति यथा—

स्त्रीणामन्यतमं स्थानं पुंसामन्यतमं पृथक् ।
अथवा मिथुनं कृत्वा क्रमात् समुपवेशयेत् ।।

तत्रैव ८।१०४-५

अपि च—

पंक्त्याकारेण वा सम्यक् चक्राकारेण वा प्रिये ।
शिवशक्तिधिया सर्वचक्रमध्ये समर्चयेत् ।।

अत्र मद्येन साकं शुद्धिखण्डमप्यावश्यकमस्ति । यथादिशति **महानिर्वाणतन्त्रम्—**

शुद्धिं विना मद्यपानं केवलं विषभक्षणम् ।
चिररोगी भवेन्मन्त्री स्वल्पायुर्म्रियतेऽचिरात् ।।

तत्रैव ६।१३

अपि च—

पानपात्रे सुधा देया शौद्ध्ये शुद्ध्यादिकानि च ।।

तत्रैव ६।१६०

तत् पानमपि त्रिधोक्तं—(१) **दिव्यपानम्**, (२) **वीरपानम्** (३) **पशुपानञ्चेति** । तत्र भगवत्याः कालिकायाः समक्षं पानं **दिव्यपानमिति** । वीराद्यासने पानं **वीरपानं**, स्वेच्छया पानं **पशुपानमिति** कथ्यते । तद्यथा—

पानं च त्रिविधं प्रोक्तं दिव्यवीरपशुक्रमात् ।
दिव्यं देव्यग्रतः पानं वीरं मुद्रासने कृतम् ।।
स्वेच्छया पशुवत् पीतं पशुपानमितीरितम् ।।

कुलार्णवतन्त्रम् ७।९४-५

एतेषां फलमप्युक्तं—

भुक्तिमुक्तिप्रदं दिव्यं, वीरं भुक्तप्रदं भवेत् ।
पशुपानं नरकदं प्रोक्तं पानफलं प्रिये ।।

तत्रैव ७।९६

अत्रैकपात्रपानेऽपि दोषोऽस्ति । यथोक्तं—

एकमात्रं न कुर्वीत् यदि साक्षात् कुलेश्वरः ।।
मन्त्राः पराङ्मुखायान्ति विघ्नश्चैव पदे पदे ।।

तत्रैव, ८।१५

अत्र पानकाले क्रियमाणानां क्रियाणामपि विवरणमवगन्तव्यम् । तदुक्तं कुलार्णवे रूपकमाध्यमेन—

तदारूढेषु वीरेषु कार्याकार्यं न विद्यते ।।
इच्छैवशास्त्रसम्पत्तिरित्याज्ञा पारमेश्वरि ।।
तत्र यद्यत् कृतं कर्म शुभं वा यदि वाशुभम् ।।
तत् सर्वं देवताप्रीत्यै जायते सुरसुन्दरि ।।
जल्पो जफलं, तन्द्रासमाधिरभिजायते ।।
विक्रियापूजनं देवि उदितं भैरवी बलिः ।
मुक्तिः स्याच्छक्तिसंयोगः स्तोत्रं तत्कालभाषितम् ।।
न्यासोऽवयवसंस्पर्शो, भोजनं हवनक्रिया ।।
वीक्षणं ध्यानमीशानि शयनं वन्दनं भवेत् ।।
तदुल्लासे कृता नाना या चेष्टा सा च सत्क्रिया ।।
कार्याकार्यविचारं तु यः करोति स पातकी ।।

[८/५७-६१]

कुलाचारेऽत्रावासरे क्रियमाणः द्वादशयोगः कथितः यथा—

**सम्मोदः परमानन्दः पतनं ज्ञानवर्धनम् ।**
**वेणुवीणादिवाद्यं च कविता रचनादिकम् ।।**
**रोदनं भाषणं पातः समुत्थानं विजृम्भणम् ।।**
**गमनं विक्रिया देवि योग इत्यभिधीयते ।।**

## पात्रशीतली करणम्

पात्र वन्दनानन्तरं **शान्तिस्तवं, आनन्दस्तवं, आनन्दकवचं, कुलस्तोत्रं** च पठित्वा पात्र शीतलीकरणं क्रियते । अन्यां क्रियायां च पात्राणि क्रमशः अधोमुखानि कृत्वा पात्रेभ्यः पतितविन्दुना भूमो मायावीजमुल्लिख्य वामकनिष्ठया तन्मृदमादाय तेन मृदातिलकं कुर्यात् ।

●

# परिशिष्टम्

## द्वितीयम्

## मातृकाधृतपारिभाषिकशब्दानां शास्त्रीयाव्याख्या

### (१) अजपा

अहर्निशं मानवानां स्वाभाविकी श्वास-प्रश्वास प्रक्रिया २१६०० संख्याका भवन्तीति तान्त्रिकाणां मतम्[1]। सा च श्वास-प्रश्वासक्रियाऽहंकारेण बहिर्याति सकारेण विशेत् पुनरिति विधानेन साधकः हंस इति मन्त्रस्यानायासेन जपं करोति। अयमेवाजपाजपो निगदितमः[2]। विषयोऽयं महामहोपाध्यायगोपीनाथकविराजमहोदयस्य **"तान्त्रिकवाङ्मय में शाक्त दृष्टि"** इति ग्रन्थे "अजपारहस्येति" लेखे विशेषेण वर्णितोऽस्ति। आगमशास्त्रेऽस्य हंस इति मन्त्रस्य सहस्रारे परशिवरूपेण स्थितिर्वर्णितास्ति[3]। साधकः साधनाबलेनास्याजपामन्त्रस्य विलोमजपेनात्म-ज्ञानकामः यतते।

**गुरुवाक्यात् सुषुम्नायां विपरीतोऽभवज्जपः।**
**सोऽहं सोऽहमिति प्राप्तो मन्त्रयोगः स उच्यते॥**

**योगबीजः १३२**

---

१. एकविंशतिसाहस्रं षट्शताधिकमेव च॥
प्रजपेत् प्रत्यहं जीवो ब्रह्मानन्दमयीं पराम्॥
पुरश्चर्यार्णवः पृ० ४८६

२. हकारेण बहिर्याति सकारेण विशेत् पुनः॥
हंसो हंस इमं मन्त्रं जीवो जपति सर्वदा॥
तत्रैव।

३. सहस्रारे तु देवेशि हंसरूपी परः शिवः।
तत्रैव पृ० ४८।

## (२) अनाहतचक्रम्[1]

द्वादशदलात्मकोऽयं पद्मः हृदयस्थः बन्धूकपुष्पवदरुणोऽस्ति । कादिथान्तवर्णास्य दलानि सन्ति । पद्मस्यास्य परिस्तरे धूम्रवर्णम् षड्भुजाकारम् वायुमण्डलमस्ति । तथा चास्योपरि सूर्यमण्डलं दशलक्षविद्यु-ज्योतिर्वदाभासमानं विराजते । तस्योपरि विराजमानं धूम्रवर्णं वायुबीजं शोभते । इदं बीजमपि चतुर्बाहुवान् अंकुशवच्चास्ति । तन्मध्ये त्रिनेत्रः ईशः हंसवद्धवलः वराभयमुद्रासहितो विराजते ।

अस्य पद्मस्याभ्यन्तरे रक्तपद्मस्था चतुर्बाहुभिः पाशकपालवराभयानि धारयन्ती, स्वर्णाभा, पीतवसना, बहुरत्नविभूषिता, अस्थिमालां च दधती अमृतेन मृदुहृदया चक्राधिष्ठातृदेवी काकिनी विराजते । त्रिकोणमध्ये अर्धचन्द्रेण बिन्दुना च विभूषितः स्वर्णाभः बाणलिंगाख्यः शिवः विराजते । स च प्रसन्न वदनेक्षणोऽस्ति । तस्याधः हंसवज्जीवात्मा तिष्ठति, स च निर्वातस्थलस्थदीपशिखावद्भाति ।

पद्मपरिस्तरस्याधोऽष्टदलरक्तपद्मोऽस्ति तत्रकल्पवृक्षः मणिमयीवेदिका चास्ति, सा च वेदिका पताकाभिः सुसज्जितास्ति । इदमेव मानवपूजा-स्थलमस्ति ।

## (३) आज्ञाचक्रम्

श्वेतवर्णाभोऽयं पद्मः हक्षात्मकः द्विदलवानेवास्ति । अस्य स्थानं भ्रूवोर्मध्ये कीर्तितम् ।

अस्य चक्रस्याधिष्ठातृहाकिनी चक्रस्य परिस्तरे वसति । सा धवला, षड्भुजा, वराभययुता, रुद्राक्षमाल्यमानवकपालमधुपात्रपुस्तकानि धारयन्ती विराजते ।

चक्रेऽस्य त्रिकोणमध्येऽभिव्यक्तो चैतन्यः इतरलिंगाख्यः शिवः विहरति । स च विद्युत्कान्तिनिभोऽस्ति । अत्रैव द्वितीये त्रिकोणे अन्तरात्मा

---

१. षट्चक्रनिरूपणम् ।—सर्पेन्टपावर पृ० २८३

२. षट्चक्रनिरूपणमितिग्रन्थे—आज्ञाचक्रस्य वर्णनं द्रष्टव्यम् ॥

दीपशिखावद्भाति । अस्याः प्रकाशकिरणाश्चतुर्दिक् प्रसरन्ति । तैर्मूलाधाराद् ब्रह्मरंध्रं यावत् प्रकाशितत्वं पश्यन्ति साधकाः । अस्योपरि मनसः स्थितिः तदुपरि च हंसात्मकं चन्द्रमण्डलं भाति । तन्मध्ये महाशक्तिसहितः परमशिवो विराजते[1] ।

### (४) इष्टदेवता

इष्टदेवता नाम प्रकृते यजनीया देवता सा चात्र कालीति ॥

### (५) कपाटवन्यासः

न्यसनं स्थापनं न्यासः । कपाटवदित्यनेनेदं बोध्यं–यथा कपाटेनार्गलया च गृहाणां सुरक्षा भवति तथैव चौरगणानां प्रतिरोधाय चौरगणेशमन्त्रान् तत्तत् स्थानेषु कपाटवन्न्यस्सेद् येन जपफलहरणं न स्यादिति ।

### (६) करमाला

त्रिधामाला पूजनादिषु प्रयुज्यते । यथा—

**माला तु त्रिविधा प्रोक्ता प्रथमा वर्णमालिका ।**
**द्वितीया चरमालोक्ता तृतीया करमालिका ॥**

**पुरश्चर्यार्णवे पृ० ४३०**

कुत्रचित् करमालापि चरमालायामेवान्तर्भूतास्ति । यथा—

**अथमालां प्रवक्ष्यामि द्विविधा सा स्थिरा चला ।**
**स्थिरा तु स्थिरचित्तानां चंचला चलचेतसाम् ॥**

**तत्रैव**

वर्णमाला तु अग्रे वक्ष्यते मातृकामालेति व्याख्यायाम् । चरमाला च मणिमयी स्यात् यथा रुद्राक्षादेर्मालिका । अत्र तु करमाला एव विशदी क्रियते प्रासंगिकत्वात् ।

---

१, षट्चक्रनिरूपणमितिग्रन्थे—आज्ञाचक्रस्य वर्णनं द्रष्टव्यम् ।

करमालाद्विधा कथिता—(१) शिवमाला, (२) शक्तिमाला च। शाक्तकर्मणि शक्तिमाला प्रयुज्यते। यथोक्तम् सा **श्यामारहस्ये** (पृ० ११८) ऋते आदिपर्वमनामिकायाः द्विः, त्रिः कनिष्ठाया, मध्यमायाः त्रयं मूलं च तर्जन्याः इत्यन्तं १० संख्यात्मिका माला स्यात्। तत्रैवोद्धृत-मुण्डमालातन्त्रानुसारेण अनामामध्यमारभ्य दक्षिणावर्तक्रमेण तर्जनीमूलपर्यन्तं १० पर्वात्मिका करमाला भवेत्। तत्र तर्जन्या आदि पर्वणी कदापि न ग्रहीतव्ये—

**तर्जन्यग्रे तथा मध्ये यो जपेत्तु भ्रमान्नरः।**
**चत्वारितस्य नश्यन्ति, आयुर्विद्यायशोबलम्॥**

—इति उक्तत्वात्।

जपं च अंगुष्ठेन गणयेत्—

**"साङ्गुष्ठाङ्गुलिभिर्जपेत्"॥**

**श्यामारहस्ये** पृ० ११७

अनेन दशपर्वात्मिकायां मालायामष्टोत्तरशतजपः कथं स्यादि चेदुक्तम्—

**"अष्टोत्तर जपे पर्व आद्यन्त द्वितयं त्यजेत्"॥**

**योगिनीतन्त्रे** पृ० २।३८

करमालया जपने अङ्गुलयः श्लिष्टा भवेयुः। अन्यथा तु तच्छिद्रेषु जप फलं स्रवते।

**अंगुलीर्न वियुञ्जीत जपकाले कदाचन।**
**अंगुलीनां वियोगेन च्छिद्रेषु स्रवते जपः॥**

**पुरश्चर्यार्णवः** पृ० ४४८

अपि चोक्तं यत् करच्छिद्रवतां जपिनां जपतेजांसि चौरगणेशः चोरयति। एतत् चौरगणेश शब्दस्य व्याख्यायां विशदी भविष्यति।

## (७) कारणम्

कारणं, हेतुः, तीर्थं, मद्यं, सुरा एते पर्यायार्थकाः शब्दाः सन्ति।

इदं द्रव्यं पीत्वा साधकः एकाग्रचित्तो भवति, तथा च तन्मयोभूत्वा स्वेष्टदेवं चिन्तयति। यथोक्तं कुलार्णवे (१७/६४) –"... **यागभूम्यैककारणात्, मद्भावजननात् ।।**" अतो हि तन्मयतायाः हेतुत्वात् कारणमिति प्रसिद्धम्। स च हेतुः सामान्यतया द्विधा भवति – (१) विजया, (२) आसवश्च परं तु एतयोर्मध्ये विजयैव श्रेष्ठास्ति—"**संविदासवयोर्मध्ये संविदेव गरीयसी**" इति **गन्धर्वतन्त्रस्य** (३८/१९) वचनम्।

## (८) कुलम्

स्वभावतोऽयं शब्दः परिभाषिकोऽस्ति। यानप्यर्थानयं प्रकटयति। तैरस्य यौगिक-योगरूढ-रूढत्वं वानुमीयते। वाचस्पत्यमित्यधानकोषे अस्य शब्दस्य १४ अर्थाः संग्रहीताः—

(१) जनपदः, देशः (२) मध्यम हलद्वयेन यावती भूमिः कृष्यते तावत्यां भूमौ। (३) गोत्रं (४) वंशः (५) सजातिगणः (६) गृहं (७) देहः (८) श्रेष्ठः (९) जीवप्रकृतितत्त्वं दिक्कालाकाशक्षित्यपतेजावायवः। (१०) शिल्पिकुलप्रधानम्। (११) कुलकुण्डलिनीत्युपचारात् तदुपासकः। (१२) वीराचारविशेषः। (१३) भूमिलग्नम्। (१४) तन्त्रोक्ते तिथिनक्षत्रवारभेदेः।

बह्वर्थकोऽयं शब्दः प्रकृतविषये मातृकायां वा स्ववर्ण्यविषयानुसारेण त्रीनेवार्थान् प्रकटयति –

(१) कौ पृथ्वीतत्त्वे लीयते इति व्युत्पत्या कुल शब्दो मूलाधारचक्राय प्रयुज्यते। यतोहि कुलकुण्डलिनी आधारचक्रे एव निवसति।

(२) जीवादितत्त्वं-यथोक्तं मूले—"**मूलादि ब्रह्मरंध्रान्तं कुलं ध्यात्वा गुरुं स्मरेत्**" अत्र कुल शब्दः अस्मिन्नेवार्थे प्रयुक्तोऽस्ति। यतो हि क्षित्यप्तेजोवाय्वाकाशादयः षट्चक्रेषु वर्तन्ते।

(३) यथोक्तं शक्तिसंगमतन्त्रे द्वितीये पटले—

**काल्युपासका ये च तत् कुलं परिकीर्तितम् ।**

**तेषां समूहो देवेशि ! कुलमित्यभिधीयते ।।**

(श० सं० ३२-३३)

अतश्च सर्वेषां काल्युपासकानां समूहः कुलं तस्य प्रतिनिधिः कौल इति कथ्यते ।

## (६) कुलकुसुमम्

काल्याः यन्त्रलेखनसाधनकथनप्रसंगेषु अयं पारिभाषिकः शब्दः प्राप्यते मातृकायाम् । वीराचारमतेऽस्यार्थः पुष्पवत्याः स्रावोऽस्ति । अस्य कुलपुष्पस्य सप्तप्रकाराः कथिताः । तेषामन्यतमेन सर्वैर्वा कालिकामर्चयेत् यन्त्रादींश्च विलिखेत् । यथोक्तं—

**पञ्चपुष्पेण वा सप्तपुष्पेण पूजयेत् शिवाम् ।**

**पूजयित्वा निशीथे तु रमणं शक्तिभिः सह ।।**

**स्वपुष्पं च स्वयंभूं च वज्रं कुण्डोद्भवं शिवम् ।**

**गोलकं पञ्चधापुष्पैः पूजयेत् परमेश्वरी ।।**

**गोपीचन्दनपुष्पेण वीरपुष्पेण शंकरम् ।**

**सप्तपुष्पेण संपूज्य निशीथे रमणेन तु ।।**

**उद्धृतेनैव पुष्पेण यन्त्रं कृत्वार्चयेच्छिवाम् ।।**

कर्पूरस्तवराजस्य रुचिरा व्याख्या पृ० १६३

उक्तानां सप्तपुष्पाणां लक्षणानि यथा—

[१] स्वपुष्पम्—

**विवाहितायाः कन्यायाः प्रथमे ऋतु संगमे ।**

**यत् शोणितं महेशान ! स्वपुष्पं परिकीर्तितम् ।।**

[२] वीरपुष्पम्—

स्वस्त्रीषु मैथुने देव ! यत् पुष्पं समुपस्थितम् ।
तत् पुष्पं वीरपुष्पं च स्वयंभूकुसुमं शृणु ।।

[३] स्वयंभूकुसुमम्—

अविवाहितायाः कन्यायाः लिंगस्पर्शाद् रजस्वला ।
तद् द्रव्यं च महादेव ! स्वयंभूकुसुमं प्रभो ।।

तद्यथा मुण्डमालायां ४/२४-२५

स्वयंभूकुसुमं देवि ! त्रिविधं भुवि जायते ।
आषोडशादनूढायां उत्तमा सर्वसिद्धिदा ।।
बलात्कारेण ऊढायां मध्यमा भोगवर्धिनी ।
रजोयोगवशादन्या चाधमा फलदायिनी ।।

[४] वज्रपुष्पम्—

विवाहितायाः कन्यायाः पुरुषस्यावताडनात् ।
यदि पुष्पं समुद्भूतं तद् वज्रं परिकल्पयेत् ।।

[५] गोपीचन्दनपुष्पम्—

पुरुषे मैथुने युक्ते यद रक्तं शुक्रमिश्रितम् ।
क्षरते च भगाद् रक्तं तद्द्रव्यं गोपीचन्दनम् ।।

[६] कुण्डोद्भवद्रव्यं पुष्पं वा[1]—

भर्तृयुक्ता च या नारी पुरुषान्यस्य योगतः ।
रक्तं समुद्धरेद्योन्या अथवा गर्भसंकटात् ।।
कुण्डोद्भवं तद् विज्ञेयं शृणु गोलोद्भवं प्रिय ।।

---

१. सधवारतिसंभूतं कुण्डमुत्तमभूतिदम् ।।
द्वितीयमुंडमालातन्त्रे—४।२२ पूर्वार्ध

[७] गोलोद्भवं पुष्पम्[२]—

**स्वामिशून्या च या नारी जारयोगाद्रजस्वला ।**
**तद्रक्तं गोलकं ज्ञेयं.............................।।**

एतदतिरिक्तं **"सर्वकालोद्भवं पुष्पं"** अपि कथितं यथा—

**मासि मासि च यद् रक्तं क्षरते योनिमण्डलात् ।**
**तद्रक्तं परमेशान ! सर्वकालोद्भव प्रिय ।।**

**कर्पूरस्तवराजस्य** रुचिराव्याख्यायां सर्वोल्लासतन्त्रस्योद्धरणं, (पृ० १६३-४) इति ।

घोरकौलमार्गे योनिपूजावसरे विभिन्नानां पुष्पाणां उल्लेख: यथा—

**आलिंगनं चुम्बनं स्तनयोर्मर्दनं ततः ।**
**दर्शनं स्पर्शनं योनौ विकाशो लिंगघर्षणम् ।।**
**प्रवेशः स्थापनं शक्तेर्नव पुष्पाणि पूजने ।।**

तत्रैव, पृ० १३४

दक्षिणाचारेऽपि पूजावसरे नवपुष्पाणि परिकल्पितानि—

**कुम्भं शंख श्रियं शक्तिं गुरुं भुक्तिं तथैव च ।**
**योगिनीं भैरवं चैव बलिपात्रं शुभं नव ।।**
**पुष्पैरभ्यर्च्य साधारं शंख संधारयाम्यहम् ।।**

तत्रैव, ललिताहृदयस्योद्धरणम्

कुण्डगोलोद्भवं द्रव्यं श्रीपात्रस्थापनावसरेऽपि प्रयुज्यते। अतोऽत्र प्रसंगवशादद्वयोः द्रव्ययोः प्राप्तिविधिरपि प्रस्तूयते—

कुण्डोद्भवद्रव्यग्रहणविधिर्यथा श्यामारहस्ये नवमे परिच्छेदे—

**"आनीय प्रमदां मत्तां दीक्षितां यौवनान्विताम् ।**
**स्वकान्तां परकान्तां वा घृणालज्जा विवर्जिताम् ।।**

---

२. विधवारतिसंभूतं गोलमृद्धिप्रदं भुवि ।।

**तत्रैव, उत्तरार्धम्**

परान्मुखोपविष्टस्तु निशायामर्धरात्रके ।
हेतुयुक्तं स ताम्बूलं दत्त्वा न्यासान् विधाय च ।।
मौलीकुन्तलकर्षणं नयनयोराचुंबनं गण्डयो-
र्दन्तेनाधरपीडनं हृदि हतिर्मुष्ट्या च नाभौ भगे ।
कक्षाकण्ठकपोलमण्डलकुचश्रोणीषु देया नखाः ।
सीमन्ते लिखनं नखैरुरसिजं गृह्णीत गाढं ततः ।।
कुर्वीताविरतं मनोभवगृहे मातंगलीलामिति ।
जङ्घाङ्गुष्ठपदेश्च गुल्फहननं चान्योन्यतः कामिनोः ।
आं इं हुं ह्रीं ब्लें-अमुकीं द्रावय स्वाहेति विन्यसेत् ।
ऐं ह्रीं चपले चलचित्तानान्तु रेतो मुञ्च द्वयं पठेत् ।।
ब्लूं क्लीं स्त्रीं क्लीं देवेशि ! द्राविणी बीजमुत्तमम् ।
तस्यां योनौ न्यसेद्विद्यां मैथुनं कारयेत् प्रिये ।।
शुद्धमन्त्रौषधेनैव[1] योनिप्रमथनं चरेत् ।
मथ्यमाने पुनस्तस्यां जायते तत्त्वमुत्तमम् ।
गृह्णीयात् तत् प्रयत्नेन द्रव्यं कुण्डोद्भवं शुभम् ।।
निःशंकमाहितं द्रव्यं गृहीत्वा तेन पूजयेत् ।।
सान्निध्यं जायते देवि ! सर्वकाममुपालभेत् ।
कुण्डोद्भवामृतं द्रव्यं कथितं दुर्लभं मया ।।

---

१. शुद्धं मन्त्रौषधं यथा तत्रैव —

मायागच्छपदं शुक्रस्तंभनकारिणि ठद्वयम् ।
अनेनार्कोपरागेण जातीमूलं समानयेत् ।।
एतद्धृत्वा साधकेन्द्रः शुक्रस्तम्भनमाचरेत् ।
मायागच्छेति —'ह्रीं आगच्छ शुक्रस्तम्भनकारिणि स्वाहा'' ।।
इति बोध्यम् ।

[१] अपरोऽपि प्रकारस्तत्रैव—

चर्व्यं चोष्यं निवेद्याथ वस्त्रालंकारणादिकम् ।
पूजयेदक्षतैः शुक्लैस्तस्या मदनमन्दिरम् ।।
भावयेत् कामतत्त्वेन तासु तत्त्वं न चोत्सृजेत् ।
शुद्धमन्त्रौषधेनैव मथयेन्मदनालयम् ।।
मथ्यमाने पुनस्तस्यां जायते तत्त्वमुत्तमम्
गृह्णीयात् तत् प्रयत्नेन द्रव्यं कुण्डोद्भवं शुभम् ।

[२] अथ गोलोद्भवद्रव्यग्रहणप्रकार—

कुलजां वीक्षितां मत्तां पतिहीनां विचक्षणाम् ।
शक्तियोग्यां सुरूपां च अनपत्यां समानयेत् ।
सुन्दरीं शोभनां दिव्यां पीनोन्नतपयोधराम् ।
द्विरष्टवर्षदेशीयां सदाकामाभिलाषिणीम् ।।
पूर्वोक्तक्रमयोगेन कृत्वान्यासादिकं ततः ।
तत्त्वं प्रगृह्य यत्नेन पूजार्थं साधकोत्तमः ।।
इदं गोलोद्भवं द्रव्यं देवतासृष्टिकारकम् ।।

इमान्येव पुष्पाणि कुलद्रव्यमित्यभिधेयानि सन्ति ।

## (१०) कुलकुशम्

सुवर्णस्य रजतस्यवाङ्गुलीयकं कुलकुशम् ।

## (११) कुलमुखम्

साधकस्यैव मुखं कुलमुखमिति कथ्यते। तेनैव मुखेन कुलगुरूणां स्मरणं क्रियते यथा च कुलदेव्याः महाकाल्याः पूजनं, स्तोत्रादि पाठश्च क्रियते । अतः कुलाचारे उपयुक्तत्वात् कुलमुखमुच्यते ।

## (१२) कुलगुरुः

काल्युपासनायां कुलशब्दः साधारणतया पारिभाषिकशब्दत्वेन प्रयुज्यते। परं तु अत्र कुलगुरुशब्दः रूढोऽस्ति निम्नांकितेषु नवगुरुषु। यथा **श्यामारहस्यतन्त्रे** प्रथमे पटले (पृ० ८)—

**प्रह्लादानन्दनाथाख्यं, सकलानन्दमेव च।**
**कुमारानन्दनाथाख्यं, वसिष्ठानन्दनाथकम्॥**
**क्रोधानन्दसुखानन्दौ, ध्यानानन्दं ततः परम्।**
**बोधानन्दं ततश्चैव, ध्यायेत् कुलमुखोपरि॥**

नवमश्च शुकानन्दः मूले उक्तः। इति

यद्यपि मूलमातृकायां गुरूणां सप्त एव संख्या प्राप्यते। शुकानन्दः अधिकः परं तु श्यामारहस्योक्तौ सकलानन्दकुमारानन्दौ न स्तः।

अन्यत्र च गुरुः, परमगुरुः, परापरगुरुः परमेष्ठिगुरुश्च एते चत्वारः कुलगुरुत्वेन प्रसिद्धाः सन्ति। एते च अतिक्रान्तपार्थिवगुणा एव सन्ति[1]। सर्वे गुरवः सहस्रारस्थात् परशिवान् निष्कृताः सन्ति इति प्रसिद्धिरस्ति तन्त्रेषु।

## (१३) कुलवृक्षः

अयमपि शब्दः केषांचन वृक्षाणां कृते रूढ एव। ते कुलवृक्षाः मूले प्रथमे पृष्ठे कथिताः।

यद्यपि प्रकृतमातृकायां इमे कुलद्रुमाः नव संख्याकाः उक्ताः। तथापि तन्त्रान्तरे वाचस्पत्यादिकोशे वा एतेषां संख्या भेद उक्तः। यथा च तालिका विशदयति—

---

1. Tne Kula-Gurus are four in number : The Guru, Paramaguru, Paraparaguru, Parameshthiguru. Each of these being the Guru of the presiding one—Introduction to Zantra Shastra. Page—67.

| मूलमातृकायाः | बृहन्नीलतन्त्रस्य | कुलार्णवस्य | वाचस्पत्यमिति कोशस्य |
|---|---|---|---|
| १. श्लेष्मान्तकः | श्लेष्मान्तकः | श्लेष्मान्तकः | श्लेष्मान्तकः |
| २. करञ्जः | करञ्जः | करञ्जः | करञ्जः |
| ३. निम्बः | निम्बः | निम्बः | निम्बः |
| ४. अश्वत्थः | अश्वत्थः | अश्वत्थः | अश्वत्थः |
| ५. हरीतकी | — | — | — |
| ६. बिल्वः | बिल्वः | बिल्वः | बिल्वः |
| ७. वटः | — | वटः | वटः |
| ८. उदुम्बरः | — | उदुम्बरः | उदुम्बरः |
| ९. चिञ्चा | — | तिन्तिडी | चिञ्चा |
| १०. | अक्षः | | धात्री |
| ११. | अशोकः | | |
| १२. | कदम्बः | कदम्बः | कदम्बः |

मूलातिरिक्तेषु ग्रन्थेषु हरीतकी कुलवृक्षेषु नास्ति । अपितु तिन्तिड्यक्षाशोककदम्बधात्र्यः वृक्षाश्चोक्ताः । भवेन्नाम सम्प्रदायभेदेन विभेदविषमत्वं च ।

एतेषु सर्वेषु कुलवृक्षेषु कुलयोगिन्यः तिष्ठन्ति तस्मात् कुलवृक्षान् दृष्ट्वा ॐ कुलवृक्षेभ्यो नम[1] इति मन्त्रेण प्रणमेत् कुलवृक्षाधश्च न स्वपेत्[2] ।

---

१. तन्त्ररहस्ये (वृत्तिः) प्रथमे पटले ।
"यदि दृश्येत् कुलतरुं प्रणमेत् साधकस्तदा ॥

२. अपि च—
तिष्ठन्ति कुल योगिन्यः सर्वेष्वेतेषु सर्वदा ।
न स्वपेत् कुलवृक्षाधो न चोपद्रवमाचरेत् ॥
शाक्तानन्दतरङ्गिण्यां पृ० ११२

## (१४) कुलारार्तिक्यम्

काल्याः आरार्तिक्यं नीराजनं वा कुलारार्तिक्यमिति कथ्यते । यथोक्तम्—काल्या नीराजनं नाम कुलारार्तिकमुच्यते ।।

## (१५) कुलकुण्डलिनी

'कौ पृथ्वीत्त्वाधारे चक्रे वा लीयते या सा'—इतिनिर्वचनात् कुण्डलिन्याः कुलकुण्डलिनीत्यभिधानं भवति ।—**"मूलाधारस्य त्रिकोणान्तर्गता"** इति मूलोक्तत्वात् तस्याः स्थाननिर्देशः विहितः ।

समष्टिरूपाद्याशक्तिरेव व्यष्टितया जीवेषु चिच्छक्तिनाम्ना कुण्डलिनीत्युच्यते[1] । जीवगतेयं जीवनी शक्तिः तस्या एव समष्टिभूतायाः त्रिगुणोपेतायाः अव्यक्तायाः महाशक्तेः प्रतिनिधित्वेनैव प्रतिभासिता भवति । सा एव सृष्टिस्थितिसंहाराणां कारणभूता । यथोक्तं वाचस्पत्यमित्यभिधानकोशे कुण्डलिनी शब्दस्य व्याख्यावसरे—

चित्तवृत्तिरूपेण सर्वत्र गमनशीला, दिक्कालाद्यनवच्छिन्ना, सर्ववेदार्थगा, पराशक्तिस्वरूपा । चैतन्यरूपा विश्वरूपेण कुण्डलिनी योगिनां समाधिप्राप्तानां वा हृदये स्फुरति । प्राणिनां योनिरेव अस्याः तडिन्निभायाः निवासस्थानमस्ति । तत्रेयं सार्धत्रिवलयोपेता कुण्डलिनी सर्पिणीव विराजते । परावाक् स्वरूपिणी सा पञ्चाशन्मातृकामयी, सर्वभूतलिपिमयी चास्ति । अतएवेयं सर्वमन्त्रमयी सर्वदेवमयी अस्ति । परात्वात् (वाण्या आदि रूपत्वात्) सूक्ष्मास्ति । सा भूः भुवः सुवः इति धामत्रयाणां जननी सोमसूर्याग्निरूपिणी चास्ति । कोटिसूर्यसमप्रभा कोटिचन्द्रसुशीतला सा कुण्डलिनी स्वयंभूलिंगमावृत्य आधार चक्रे विराजते ।

---

१. द्र० Tantra : It's Mystic and Scientific Bases, P. 64.

२. यथोक्तं तोडलतन्त्रे ८/१५

"लिंगच्छिद्रं स्ववक्त्रेण कुण्डल्याच्छाद्य संस्थिता" ।

षट्चक्रनिरूपणं इति ग्रन्थधृतप्रयोगसारे सा "कारणप्रिया" इति कथिता। तथैव च मूलमातृकायां विजयाग्रहणावसरे—आजिह्वान्तं कुलकुण्डलिनीं विभाव्य ······ कुण्डलिनीमुखे जुहुयात् इति भावितम्। गुरुमानसपूजावसरेऽपि ब्रह्मरंध्रान्निर्गच्छन्त्या माध्वी-धारया तस्यास्तर्पणस्य विधानमस्ति मूले। एवञ्च महती महत्तामयीयं सर्पिणी तन्त्रशास्त्रस्यात्मभूता सती तान्त्रिकसंस्कृतौ प्रधानत्वेन प्रतिपाद्यते[1]। अस्याः जागरणं तन्त्रसाधनायाः लक्ष्यम्। तदनन्तरमेव साधकस्य चेतना प्रकाशरूपेण स्फुरते। तस्यां दशायां शिवत्वं च जायते[2]। अविद्याया प्रध्वंसने इयमेव समर्था[3]। स्वाविद्याया अभावकरणादेव परमानन्दमोक्षा-नन्दस्य च प्राप्तिर्भवति।

इयं शास्त्रेषु आत्मिकचिच्छक्तिस्वरूपेण वाण्या आदि स्वरूपेण च प्रतिपादितास्ति। अद्यतनीयाः केचन विद्वस्यमानाः भौतिकाः शरीरस्थां काचिन् नाडीविशेषां कुण्डलिनीमिति प्रतिपादयन्ति। तत्र हेतुः भ्रम एव,

---

१. Mantra Yantra and Kula-kundalini are the cordial principle of the Tantric culture...

—Tantra : It's Mystic and Scientific bases, P. 64.

२. With the awaking of the Kundalini the Sadhak, starts lossing the feeling of Iness, it has consuming effect, the individual losses his own individuality. As fire is telent in wood and on the rubbing of the wood is made kienetic and burns it's very sourse, similerly when kundalind becomes conssious it burns the very seed of individuality, it cuts under the bandage of pacience and becomes Shiva

—तत्रैव, पृ० ६५

३. One can retrace one's way against the positive form of pacience, only wilh the heip of same negative force. Kundalini the spiritual force with it's fundamental negativity offers the help.

—तत्रैव, पृ० ६५

कथमितिचेत् स्वरूप भेदात्[१]। कुण्डलिनी चिद्रूपास्ति। वर्णशरीरिणी सा सूक्ष्म देहे मूलाधर एव सार्धत्रिवलया सर्पिणीव प्रकाशरूपं स्वयंभूलिङ्गं परिवृत्य राजते। तस्याः स्थितिः स्थूलशरीरे नास्ति।

मूलाधारचक्रस्था शक्तिपिण्डात्मिकेयं चिच्छक्तिर्मनुष्याणां[२] कारण-शरीरस्था सती शब्दब्रह्मरूपैवास्ति[३]। स्थितिवशादियं कुलकुण्डलिनी स्वात्मानं सप्तधा विवर्तयति यथाहि—(१) शक्तिः, (२) ध्वनिः, (३) नादः, (४) विरोधिका, (५) अर्धेन्दुः, (६) विन्दुरिति[४]। एते एव पराध्वनयः वैयाकरणानाम्।

अतश्चास्या आदिवाक्स्वरूपमभिलक्ष्य सृष्टेः आदिकारणत्वमनुभूय[५] सर्वास्वेव शक्तिपूजासु, अस्याः ध्यानोपासना प्रतिपादिता, यतो ह्येषैव

---

१. To our mind the kundalini interpreted as suspent—power is the vegus nerve of the modern science which suplise controls all the impartant vital organs deferent flexes of the sympiatic portion of the outonomic nervous system the mysterious Kundalini.

—The Serpent Power, 43

२. The Serpent Power. पृ० १६७ (टिप्पण्यां)—

पिण्डं कुण्डलिनी शक्तिः। पदं हंसः प्रकृतिस्थः।
रूपं विन्दुरितिख्यातम्। रूपातीतस्तु चिन्मयः॥

३. तत्रैव पृ० १६७ अपि च Introduction to, पृ० १६।

४. The Serpent power अध्याय—चक्रपद्म।

५. There is a shakti called kundalini is ever engaged in the work of creating the universe. He who has known her never again enters the mother's womb as a child or suffer old age.

—तत्रैव पृ० १६७

कुण्डलिनी ब्रह्माण्डे व्याप्ताया शक्तेः सूक्ष्मस्वरूपमस्ति । यां विज्ञाय सर्वेषां देवानां स्वरूपज्ञानं भवति ।

## (१६) चौरगणेशः

"गण" शब्दस्यार्थद्वयं समुपलभ्यते । तद्यथा—(१) शंकरस्य परिजनाः गणाः इति कथ्यन्ते तेषां गणानामीशो गणेश इति । (२) गणनायामपि गणशब्दस्य प्रवृत्तिर्भवति । अतश्च प्रकृतप्रसंगेऽस्यार्थः एवं स्याज्जपकाले साधको करमालया मणिमालया वा जपं गणयति । तस्मिन् काले या विधानच्युतिर्भवति तस्याः फलाफलविधाता देवोऽपि गणेशोऽस्ति गणनाया ईशः इति व्युत्पत्या ।

तन्त्रनये जपकाले साधकस्यांगुल्योर्मध्ये किञ्चदप्यवकाशो न भवेदन्यथा गणेशः सर्वमेव जपफलं चोरयति[1] । अतश्च चौरश्चासौ गणेश श्चेति व्युत्पत्यास्याभिधानं संगतमेव । अनेन गणेशेन तस्य पञ्चाशद्गणाः शरीरस्थेषु षट्चक्राणां पंचाशत्पद्मपत्रेषु संस्थापिताः । ते गणाः अंगुल्यवकाशयुक्तानां जापिनां जपफलं हरन्ति । चौरगणेश एव तेषां गणानां संचालकोऽस्ति ।

परन्तु चौराय चौरं नियोजयेदिति सिद्धान्तमनुसृत्य यः साधक-श्चौराणां गणानां प्रवेशद्वारेषु शरीरस्थेषु छिद्रेषु चौरगणेशमन्त्रान्कपाटवत् स्थापयति, तस्य साधकस्य मर्षणीयां च्युतिं चोरगणेशः पूरयति तेन पूजायाः साफल्यं भवति । यथोक्तं स्वयं गणेशेनैव—

**गणेश उवाच**

अधुनाहं प्रवक्ष्यामि चौरमन्त्रमतः शृणु ।
चौरमन्त्रपरिज्ञानं विना हे ब्रह्मणेश्वरि ।।

---

१. "करच्छिद्रवतां जापिनां जप फलहारके गणेशभेदे ।

द्र० वाचस्पत्यं चतुर्थखण्डः चौरगणेश शब्दः

पुराणं प्रपठेद्यस्तु स एव मूर्तिमान् कलिः ।
परजन्मनि पापिष्ठः स भवेत् चौरकुक्कुरः ।।
शिवपूजा शक्तिपूजा विष्णुपूजा तथैव च ।
सर्वपूजासु यत्तेजः हरते गणपः स्वयम् ।।
पंचाशद्गणदेवानां ज्योतींषि मुनिपुंगवाः ।
प्रतिद्वारपथे गत्वा प्रतिपद्मेषु जृम्भते ।।
हरन्ति जपतेजांसि प्रतिपद्मेषु संस्थिताः ।
जपपूजासु यत्तेजस्तत्र चौरगणाधिपः ।।
तस्माच्चौर प्ररोधार्थं चौरमन्त्रं जपेद्दृश ।
चौरमन्त्रं महामन्त्रं पंचाशद्गणतोषणम् ।।
चौरमन्त्रं विना भद्रे ! शान्ति-स्वस्त्ययनं कुतः ।
चौरमन्त्रं च हे भद्रे ! प्रतिद्वारे कपाटवत ।।

द्र० ''देवता''—पृ० ८०

समस्तानां धार्मिकक्कृत्यानां प्राक् चौरगणेशमन्त्रान् विधिवज्जपेत् । यथोक्तं गणेशविमर्शिन्याम्—

चौरगणेशमन्त्रं न जप्त्वा कर्ममात्रं न कुर्यात् । यदि कुर्यात् तदा दोष उक्तो वर्णविलासतन्त्रे ।।—तत्रैव ।।

## (१७) चौरगणेशन्यासः

चौर गणेशस्तूक्त एव तन्मन्त्राणां न्यास एव चौरगणेशन्यास इति बोध्यः । अस्यविधिर्लिखितोस्ति मूलमातृकायाम् । ततः—

"क्रों ह्रीं ह्रीं ह्रीं ह्रीं ह्रीं हुं हुं ह्रीं ह्रीं ह्रीं ह्रीं ह्रीं ऐं क्लीं ह्सौः क्लूं हुम् ।"

एतान् बीजमन्त्रान् विधिवत् शरीरस्थेषु एकादशसु द्वारेषु प्रत्येकत्र दशधा एकधा वा स्थापयेत् । द्वाराणि च—हृदयं, नेत्रद्वयं, कर्णद्वयं, नासापुटद्वयं, मुखं, नाभिः, लिंगमूलं, ब्रह्मरंध्रञ्च ।

## (१८) नादानुसंधानम्

आदिक्षान्तानां पञ्चाशद्वर्णानां संयतभावेन अविच्छिन्नक्रमेणोच्चारणमेव नादानुसंधानमिति कथ्यते । तच्च लययोगे वर्णिता यौगिक प्रक्रिया एव । एतद्विषयः विशदतया महामहोपाध्यायानां गोपीनाथकविराजमहोदयानां—**"नादतत्त्व"** शीर्षके निवन्धे द्रष्टव्यः[१] ।

## (१९) निर्वाणः

जपक्रियाया अंगभूतोऽयं शब्दः पारिभाषिकोऽस्ति । निर्वाणस्य जपः मन्त्रजपस्यादावन्ते च विहितः । यथोक्तं—

**एवं पुटितं मन्त्रं तु प्रजपेन्मणिपूरके ।।**

आगमरहस्यम् भा० १, पृ० १८५

निर्वाणस्य श्रीकुलकालीकुलभेदेन द्विधाविभाजनं भवति । यथा—श्रीकुले—ॐ ततः मातृकावर्णन् (आदिक्षान्तान्) ततः मूलमन्त्रं ततः ऐं पुनः मातृकावर्णान् ततः ॐ जपेदिति ।

---

१. उक्तः लेखः "तान्त्रिकवाङ्मय में शाक्त दृष्टि" इत्याभिधानके ग्रन्थेऽस्ति ।

२. प्रणवं पूर्वमुच्चार्य मातृकार्णान् समुच्चरेत् ।
ततो मूलं महेशानि ! ततोवाग्भवमुच्चरेत् ।
मातृकार्णान् समुच्चार्य पुनः प्रणवमुच्चरेत् ।।

आगमरहस्ये भा० १ पृ० १८५ ।

कालीकुले च ॐ मातृकावर्णान् हुं ह्रीं श्रीं मूलमन्त्रं ॐ मातृकावर्णान् हुं ह्रीं श्रीं इति मन्त्रं सप्तधा जपेत्[1]। इत्थं विधिविशेषमनुसृत्य मन्त्रजपः निर्वाणपदस्यार्थोऽस्ति प्रकृते ।

## (२०) निजगुरुः

स्वस्यात्मनो गुरुर्निजगुरुरिति कथ्यते । स च निजगुरुर्नास्ति सामान्यः, अपितु शिवरूपः आज्ञाचक्रस्योर्ध्वे सहस्रदलपद्मकेशरे शून्यचक्रस्थचन्द्रमण्डलोपरिकल्पितसत्सिंहासनोपरिपरमशिवरूपेण स्थितोऽस्ति[2]। स च द्विभुजः द्विनेत्रः[3] शुद्धस्फटिकसंकाशः कर्पूराभो[4] वा शुद्धपाटाम्बरधरो वराभयमुद्रा विभूषितः शान्तः प्रसन्नवदनः प्रफुल्लेन्दीवराकारवत्[5] प्रसन्नवदनेक्षणः शुक्लगन्धपुष्पादिभिरलंकृतः रक्तोत्पलधारिणीशक्तिसहितः ज्ञानैकमुदितमानसः राजते । यथा मूलमातृकायामेव निरूपितः निजगुरुः—**"नमामि सद्गुरुंशान्तं"** इति । स्पष्टं यत् शून्यचक्रस्थपरमशिव एव गुरुरूपेण विज्ञायते । यथोक्तं योगिनी तन्त्रे प्रथमेपटले (श्लोक ४४)—

---

१. प्रणवं मातृकां कूर्चं मायां लक्ष्मीं ततो मनुम् ।
प्रणवं मातृकां कूर्चं मायां लक्ष्मीं च ''सधा ।।

तत्रैव ।।

२. सहस्रदलपद्मस्थमन्तरात्मानमुज्ज्वलम् ।
तस्योपरि नादविन्दोर्मध्ये सिंहासनोज्वले ।
चिन्तयेन्निजगुरुं नित्यं रजताचलसन्निभम् ।।

कंकालमालिनी तन्त्रे ३। -११

३. ध्यायेच्छिरसि शुक्लाब्जे द्विनेत्रं द्विभुजं गुरुम् ।

महानिर्वाणतन्त्रे ३।२६

४. कर्पूराभं स्मरेत्तत्र श्रीगुरुं निजरूपिणम् ।

तत्रैव ।।

**"देवि ह्यमानुषीं चेयं गुरुता नाम संशयः ।।"**

सामान्यतया गुरोर्महत्त्वं शिवतुल्यमेव मन्यन्ते तान्त्रिकाः । यथोक्तं **"षट्चक्रनिरूपणम्"** इति ग्रन्थे (पृ० ६५)

**हंसपीठे मन्त्रमये स्वगुरुं शिवरूपिणम् ।**
**अमुकानन्दनाथान्तं स्मरेत्तन्नामपूर्वकम् ।।**

अस्य निजगुरोर्ध्यानं प्रातःकाले साधकैरवश्यमेव कर्तव्यम्—

**"ततस्तु मस्तके चिन्त्यं सहस्रदलपद्मकम् ।**
**कर्पूराभं स्मरेत्तत्र श्रीगुरुं निजरूपिणम् ।।**

(मेरुतन्त्रे, पृ० ६९ श्लोक ३१)

## (२१) परशिवः

परशिव एव निजगुरुरस्ति इति व्याख्यातम् । यथोक्तमयं परशिवः सहस्रारसुषुम्णाया ऊर्ध्वे अधोमुखः, आनन्दस्वरूपः, पूर्णचन्द्रवच्छुभ्रकान्तिं विकीर्णयन् विराजते । तत्र च अकारादि-क्षकारान्तपञ्चाशद्वर्णाः शुक्लाभाः विंशत्यावर्तेन सहस्रदलेषु सुशोभिताः । अस्य कर्णिकायां सूर्याभः "हंसः" स्थितोऽस्ति, तदुपरि परमगुरुरूपोऽयं परशिवःबिन्दुरूपेण विराजते । इत एव माध्वीधारा अजस्ररूपेण क्षरते । यथोक्तं **षट्चक्रनिरूपणे** (श्लोक ४३)—

**सुधाधारासारं निरवधि विमुञ्चन्नतितराम् ।।**

अयं परशिवः सर्वेशः पिण्डस्थं ब्रह्मास्ति । स च रूपभेदात् सप्तनाम्ना प्रसिद्धः । तेषु प्रथमः शम्भुरस्ति । स च कालस्य समयस्य वा सहकार्यस्ति शम्भोः सदाशिवस्य प्राकट्यं भवति, यश्च सर्वान् व्याप्नोति व्यञ्जयति च[1] । तेनैव परशिवेन, ब्रह्मभूतेन बिन्दुस्वरूपेण सार्धं चिच्छक्तेः परावाग्रूपायाः कुण्डलिन्याः संयोगं विधाय साधकस्ततः क्षरमाणया माध्वी-धारया कुण्डलिनीं तर्पयति । तस्मिन् काले शिव-शक्ति-सामरस्यात् चित्तवृत्तीनां अन्तर्मुखत्वाच्च इष्टदेवस्य स्वरूपस्फुरणं साधकानां हृदि जायते—

---

१. **विशेषो द्रष्टव्यः**—Introduction to Tantra Sastras इति ग्रन्थे Siva and Sakti इति अध्याये ।

शिवशक्तिसमायोगादव्यक्तात् परमेश्वरात् ।
आद्या भगवती देवी सैव त्रिपुरसुन्दरी ।।
आसीच्छक्तिस्ततो नादो नादाद्बिन्दुसमुद्भवः ।।
षट्चक्रनिरूपणम्, श्लोक ३

## (२२) पादुका

पदे-पदे अस्माकं पदधारणक्षमा पादुका इति व्युत्पत्या पादुका[1] साधकानां सिद्धिप्रदायिका काचिदस्ति[2]। अस्या रहस्याच्छन्नायाः पादुकायाः स्थानमुक्तं शिरःस्थाधोमुखसहस्रारपद्मस्य कर्णिकायाम् । यथोक्तं योगिनीहृदये (पृ० १६१) परापूजा प्रकरणे—

**ब्रह्मरंध्राधोमुखसितसहस्रदलकुलकमलं तस्य कर्णिकास्थवाग्भवे (वाचः परापश्यन्तीमध्यमावैखर्यो भवन्त्यस्मादिति वाग्भवं) त्रिकोणं तत्रस्थेयं पादुका महती महत्तामयी राजते[3]। अनेनैव धर्मार्थकाममोक्षाणां प्तिरपि भवेत् ।**

शुचिर्वाप्यशुचिर्वापि भक्त्या स्मरति पादुकाम् ।
अनायासेन धर्मार्थकाममोक्षान् लभते नरः ।।

## (२३) पादुकामन्त्रः

तन्त्रयोगे वर्णितः शिरस्थ सहस्रदलकमलकर्णिकान्तर्गतः परशिवः- विराजते । तस्यपादद्वमेव पादुकेति कथ्यते । तस्याः पादुकायाः मन्त्र उक्तो मूलमातृकायाम् । तस्य मन्त्रस्योद्धारः परशुरामकल्पसूत्रे प्राप्यते । मूलधृत-मन्त्रात् किंचिद्वैषम्यं तस्य परिलक्ष्यते । तद्द्रष्टव्यं निम्नतालिकायाम्—

---

१. पालनाद् दुरितच्छेदात् कामितार्थविवर्धनात् ।
पादुकेति समाख्याता मम तत्त्वं तव प्रिये ।।
कुलार्णवः १७।३३

२. सहस्रारे गुरोः पादपद्मं ध्यात्वा प्रपूज्य च ।
केवलं देवभावेन जप्त्वा सिद्धीश्वरो भवेत् ।।
बृहन्नील० १०।२७-८

३. गुरोरनुज्ञामात्रेण दुष्टमन्त्रोऽपि सिध्यति ।
गुरुं विलंघ्य शास्त्रेऽस्मिन् नाधिकारः सुरैरपि ।।
तत्रैव १०।२६

## गुरुपादुकामन्त्रोद्धारः

२१

| मूलमातृकाधृतवर्णाः | प० क० सू० मन्त्रोद्धारसंकेतः । | मूलधृतमातृकावर्णाः |
|---|---|---|
| ॐ ऐं ह्रीं श्रीं | तारत्रिकं | स्वगुरुनामतोष्टाक्षरी चेति श्रीपादुका (अष्टाक्षरे आदौ श्री रिति वर्णः ततः पूर्वं गुरोर्नामित्यर्थः) अमुकानन्दनाथायामुकी देव्यं वा श्रीपादुकां पूजयामि नमः । |
| ह्सखफ्रें (ह्स्ख्फ्रें) | सप्तममुद्रा | |
| ह स क्ष म ल | शिवं, शक्तिं, संवर्तं, पुपश्चमं, पुरन्दरं | |
| वरयूं | वरयूं | |
| सह्खफ्रें | नास्ति कश्चित् सङ्केतः | |
| स ह् क्ष म | शक्तिशिवक्षम | |
| ल | वादि (वस्यादि वर्णो लः) | |
| वरयीं | वरयीं | |
| ह्सौः | शिवभृगुत्रिशूलविन्दु- | |
| स्हौः | भृगुशिवत्रिशूलविसृष्टयः | |

मन्त्रोद्धारः—(परशुरामकल्पसूत्रम्—पृ० ३८१ सू० ३२)

तारत्रिकं सप्तममुद्राशिवशक्तिसंवर्तं पुपश्चमपुरन्दर वरयूं शक्तिशिवक्षमान्ते वादि वरयीं शिवभृगुत्रिशूल विसृष्टयः श्रीपूर्वं स्वगुरु नामतोऽष्टाक्षरी चेति पादुका च ।

अत्रास्मिन् मन्त्रोद्धारे सप्तममुद्रायाः "ह्सखफ्रें" इत्यस्य विलोमस्वरूपं (सहखफ्रें यश्च मूले दृश्यते) न प्राप्यते ह्सौः इत्यस्यापि तदनुसारेण ह्सौं इति स्वरूपं भाव्यम् ।

## (२४) प्राणायामः

प्राणस्य वायोरायामः दीर्घत्वं प्राणायाम इति कथ्यते। यया क्रियया मनुष्यः स्वश्वासप्रश्वासक्रियां दीर्घकालसम्पाद्यां करोति सः प्राणायाम इति। प्राणयामस्तु अधोनिर्दिष्ट स्थलेषु करणीयः—

**नित्यदेवार्चने होमे संध्यायां श्राद्धकर्मणि।**
**स्नाने दाने तथा ध्याने प्राणायामं समाचरेत्॥**

कर्मठगुरुः पृ० १४ टि०

प्राणायामस्य प्रक्रियायां अवस्थात्रयं वर्तते। तद्यथा—

(१) **पूरकः**—वहन्नासिकया दक्षिणनासापुटेन वा इष्टदेवं ध्यायन् अथवा—

**नीलपंकजविख्यातमानीय नाभिमध्यतः।**
**महात्मानं चतुर्बाहुं केयूरं तं हरिं स्मरेत्॥**

तत्रैव वृहत्पाराशरसंहिताया उक्तिः।

एवं हरिं ध्यायन् सावित्रीमन्त्रं इष्टदेवस्यमूलमन्त्रं वा जपन् शनैः शनैः वायुं पूरयेत्।

(२) **कुम्भकः**—एवं वायुं पूरयित्वा इष्टं ध्यायन् अथवा—

**हृत्कुम्भके ध्यायेद्ब्रह्माणं पंकजासनम्।**
**रक्तेन्दीवर वर्णाभं चतुर्वक्त्रं पितामहम्॥**

तत्रैव॥

एवं प्रकारेण ब्रह्माणं ध्यायन् वायुं संरोधयेत् (पूरकस्य द्विगुणितसमयं यावदित्यर्थः)। अंगुष्ठेन मध्यमानमिकाभ्यां च नासापुटद्वयं छादयेत्।

(३) **रेचकः**—अपर (वामेन) नासापुटेन वायुं इष्टदेवं शंकरं वा—

**"रेचके शंकरं ध्यायेल्ललाटस्थं त्रिशूलिनम्।**
**शुद्धस्फटिक संकाशं संसारार्णव तारिणम्॥**

तत्रैव पृ० १४

एवं ध्यायन् शनैः शनैः वायुमुत्सृजेत्[1]।

प्राणायामस्तु शरीरशुद्धयर्थमात्मबलदेवत्वप्राप्तिसाधनानामन्यतमोऽस्ति साधनविशेषः। यथोक्तम्—

**एवं श्वसनसंरोधे देवतात्रयचिन्तनात्।**
**अग्निवाय्वम्बुसंयोगादान्तरं शुद्धयते त्रिभिः॥**

कर्मठगुरौ पृ० १४

प्राणायामक्रियायाः विश्लेषणेशाक्तदर्शनमिति ग्रन्थे एवं प्राप्यते सूत्ररूपेण[2]—

**"रेचकपूरककुम्भकात्मकः प्राणायामः॥७॥**

**मूलमन्त्रात्मकः॥८॥**

**हकारस्मरणपूर्वकं कर्षणं षोडशमात्रात्मकः पूरकः॥९॥**

**रेफस्य तु चतुष्षष्ठ्या मात्रया कुम्भकः॥१०॥**

**ईकारस्य द्वात्रिंशन्मात्रया रेचकः॥११॥**

**व्युत्क्रमतः॥१२॥**

**धारणं मूलजपः॥१३॥**

**पूरके वेद संख्या (४)॥१४॥**

**कलाः कुम्भके (१६)॥१५॥**

**वसु रेचके (८)॥१६॥**

क्वचित्तु—

**रेचकं पूरकं त्यक्त्वा सुखं वायुविधारणम्।**
**प्राणायामोऽयमित्युक्तः सर्वैः केवलकुम्भकः॥**

---

१. शनैर्नासापुटाद्वायुमुत्सृजेन्न तु वेगतः॥

कर्मठगुरुः १४ पृष्ठे टिप्पण्याम्।

२. शाक्तदर्शनम्—अध्याय १४ पादः २ सूत्राणि ७-१६।

इत्येतेन कुम्भकमात्रलक्षणः प्राणायाम उक्तः इति । अत्र मात्राकालस्य विवेकः कृतः टीकायाम् । यथा चोक्तं नागेशभट्टैः योगसूत्रवृत्तौ—

**तत्र मात्रानिमेषोन्मेषावच्छिन्नः कालः लध्वक्षरावच्छिन्नो वा…… प्रणवोच्चारणावच्छिन्नः काल इत्यन्ये[1] ।**

सूत्रेषु पूरकादिषु ह्लीं इति मन्त्रस्य देवीप्रणवस्य अवयवानां जपविधानमुक्तम् । व्युत्क्रमत इति—रेचकः कुम्भकः पूरक इति क्रमो बोध्यः ।

## (२५) पीठन्यासः

स्वहृदि भावनया स्वेष्ट देवतायाः स्वरूपं ऐश्वर्यसम्पन्नस्थले कल्पयित्वा तत्र यन्त्रस्थापनमेव पीठन्यासः । यथा मूलेवर्णितमस्ति ।

## (२६) मणिपूरः

षट्चक्रेषु द्वितीयः नाभिप्रदेशस्थः । स च मेघवर्णः दशपत्रात्मकोस्ति । दादि फान्तः दशवर्णा एव अस्य पत्राणि सन्ति तान्यपि नीलवर्णात्मकानि सन्ति । अस्य परिस्तरे रक्तवर्णात्मकः अग्निप्रदेशः वर्तते यश्च त्रिकोणाकारोऽस्ति । त्रिकोणस्य बाह्यप्रदेशे त्रीणि स्वस्तिकचिह्नान्यङ्कितानि । त्रिकोणमध्ये रक्तवर्णो मेषारूढश्चतुर्बाहुवान् (वज्रं शक्ति वराभयमुद्रे च धारयन्) वह्निः बीजरूपेण विराजते । तन्मध्ये रक्तवर्णो वृषभारूढः भस्मविलेपनात् श्वेतीकृताङ्गः रुद्रः राजते ।

अस्य मणिपूराख्यस्य पद्मस्य कर्णिकायां रक्तवर्णात्मके कमले नीलवर्णा त्रिनेत्रयुता चतुर्बाहुधारिणी तैर्बाहुभिः वज्रं शक्ति वराभयमुद्रे च धारयन्ती चक्राधिष्ठात्री शक्तिर्लाकिनीति विराजते । सा च लाकिनी भयंकरी खेचरान्नप्रिया चास्ति ।

---

१. तत्रैव टीकायां द्रष्टव्यम् ।

## (२७) मन्त्रः

सर्वात्मिकायाः सर्वशक्तिसम्पन्नाया महाशक्तेः सत्ता सर्वत्रैव व्याप्तास्ति। यथा विद्युच्छक्तिगृहात् विद्युद्धारा सर्वत्र प्रवाहिता भवति। मनुष्याः स्वस्वावश्यक्तानुसारेण उपभुञ्जन्ति। यथा— ऋषभादिसप्तस्वरैरेव गायनाः प्रकृतिस्थानां जलाग्न्यादीनां प्रकटनं कुर्वन्ति विभिन्नरागाणां मानेन, तथैव प्राचीनाः ऋषयः स्वकामनार्थं पुरुषार्थ-सिद्धचर्थं वा ज्ञातवर्णमातृकया सर्वत्रव्याप्तया शक्त्या सह संबन्धं कल्पयित्वा वर्णमातृकाणां यथायोग्यं गुम्फनं कृतवन्तः। त एव यथोचित गुम्पितवर्णात्मकाः शब्दाः श्लोका वा मन्त्राः कथ्यन्ते। यथोक्तं शिवसूत्रे (द्वि० उन्मेषः)—

**"विद्याशरीरसत्ता मन्त्ररहस्यम्।**

**सा मन्त्राणां रहस्यं .... .. .. .... ॥**

(विमर्शिनी पृ० ५०)

चराचरात्मकमिदं जगत् आकाशेनावृतमस्ति। आकाशः शब्दगुणकोऽस्ति। साधकेनोच्चारिताः शब्दाः आकाशेऽति सूक्ष्मं तरंग-मुत्पादयन्ति, येन शब्देन सह यस्याः देवतायाः संबन्धो भवति तया सः तरंगः संयुज्यते तथा च देवतायाः प्रकाशः साधकस्य हृदये उत्पद्यते। तच्छब्दस्योद्गमस्थानत्वात्। एषा स्थितिः मन्त्राणां सिद्धावस्थास्ति। **सौभाग्यभास्करा**दिग्रन्येषु मन्त्रशब्दस्य निर्वचनं ध्यातव्यम्—

**पूर्णाहन्तानुसन्धात्मा स्फूर्जन् मननधर्मतः।**

**संसारक्षयकृत् त्राणधर्मतो मन्त्र उच्यते ॥**

(सौ० पृ० ५२)

अपि च—

**मोचयन्ति च संसाराद्योजयन्ति परे शिवे।**

**मननत्राणधर्मित्वात्ते मन्त्रा इति च स्मृताः ॥**

(नेत्रतन्त्रम् एकादशोऽधिकारः)

अपि च—

**मननात्तत्त्वरूपस्य देवस्यामिततेजसः ।**
**त्रायते सर्वभयतस्तस्मान्मन्त्र इतीरितः ।।**

( कुलार्णवः १७/५४)

सर्वाण्येवोपर्युक्तानि निर्वचनानि इदमेव तथ्यं प्रतिपादयन्ति यत् मन्त्राः देवानां सूक्ष्मरूपाः प्राणाः सन्ति ।

## (२८) महाशंखः

अत्र महाशंखो नामास्थिविशेषः, यस्य स्थितिः कर्णनेत्रयोरन्तरालेऽस्ति । यथा—

**कर्णनेत्रान्तरालस्थो महाशंखः प्रकीर्तितः ।।**

(पुरश्चर्यार्णवः ४३३ पृ०)

अनेन विशेषार्घ्यपात्रं निर्मीयते । कालिकापूजाप्रसंगे मालानिर्माणेऽपि महाशंखस्य प्रयोगः क्रियते । सा च महाशंखास्थिमयीमाला रहस्यमालेति कथ्यते यथोक्तं—

**महाशंखमयी माला पञ्चाशन्मणिनिर्मिता ।**
**रहस्यमालासंप्रोक्ता गोपनीयाप्रयत्नतः ।।**

तत्रैव ।।

एषा रहस्यमाला वर्णमालायाः प्रतिनिधित्वेनापि स्वीकृतास्ति--

**वर्णमाला शुभा प्रोक्ता सर्वमन्त्रप्रदीपिनी ।**
**तस्याः प्रतिनिधिर्देवि महाशंखमयी शुभा ।।**

(योगिनीतन्त्रम् २ २०)

## (२६) मन्त्रचैतन्यम्

मन्त्रशास्त्रे मन्त्राः सामान्यशब्दवत् कस्यचित् सामार्थ्यस्य बोधकाः न स्वीकृताः। अपितु मन्त्राः समस्तायाः सृष्टेः मूलस्वरूपाः चैतन्यस्वरूपाश्च सन्ति। अतएव साधकस्य चित्ते स्वमन्त्रान् प्रति साधारणशब्दभावो न स्यात् अपितु ब्रह्मभावः स्यात्। मन्त्राः साधकेभ्यः चैतन्यवद्भवेयुः। साधकाश्च तेषु लीना भवेयुः।

एषा मन्त्रचैतन्यप्रक्रिया तत्प्रतिपादकशास्त्रेषु अनेकधा वर्णिताः वर्तन्ते। यथा--

(१) साधकः स्वमन्त्रवर्णान् चिच्छक्त्या कुण्डलिन्या सह एकीकृत्य वर्णभावं तिरस्कुर्वन्, षट्चक्रभेदक्रमेण परमे व्योम्नि शब्दब्रह्मरूपेण चैतन्येनै-करसीकृत्य, पुनः तैरेव देदीप्यमानैः सनातन चैतन्यरूपैर्वर्णैः निर्मितस्य साक्षात्कारं कुर्यात्।

(२) हृदयस्थेऽनाहतचक्रे मन्त्रवर्णानां स्थितिरस्ति इति साधको ध्यायेत्। पुनश्चमूलाधारादुत्थिता कुण्डलिनी सुषुम्णामार्गेणागत्य विशुद्धचक्रं भिन्दन्ती तान् मन्त्रवर्णान् सहस्रारचक्रे नयति इति भावयेत्। तत्र सहस्रारपद्मस्य कर्णिकायां नादविन्दुसंयुक्तस्य मन्त्रस्य सम्पूर्णक्षिराः स्थिताः सन्ति। अपि च चैतन्यरूपमन्त्रशक्तिः स्फुरिता भवति। मन्त्रस्य प्रत्येकाक्षरः-चैतन्यशक्त्या एव निर्मितः ग्रथितः वर्तते इति भावयित्वा मन्त्रवर्णान् नाभिस्थे मणिपूरचक्रे आनयेत्। तत एव ते वाणीरूपेण प्रस्फुटन्ति इति ज्ञात्वा चिद्रूपेण तान् जपेत्।

(३) मन्त्रं कामश्रीलज्जाबीजैः पञ्चाशन्मातृकाभिश्च संपुटीकृत्य अष्टोत्तरशतं जपेत्। इत्यपि मन्त्रचैतन्यस्य प्रकारोऽस्ति।

(४) सूर्यमण्डलान्तर्गतान् मन्त्रवर्णान् भावयन् अष्टोत्तर शतं जपेत्।

(५) वरदातन्त्रानुसारेण "ईं" इति मन्त्रेण संपुटीकृतं मन्त्रं जपेत् ।

मन्त्रचैतन्यप्रकारः "कल्याणस्य साधनांके" मन्त्रसाधनाशीर्षके लेखेऽपि द्रष्टव्यः ।

सर्वषां सौरगाणपत्यादीनां सम्प्रदायानां कृते मन्त्रचैतन्यकरण-मावश्यकम्—

सौरे गाणपते शैवे शक्तिमन्त्रेऽथ वैष्णवे ।
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रामुपाचरेत् ।।

(आ० र० १, पृ० १७६)

## (३०) मन्त्रशिखा

मन्त्राणां शिखाज्ञानमपि कुर्यात् । यथा तमः पूर्णे गृहे किं—चिदपि । न प्रतिभाति तथैव शिखाज्ञानहीनस्य साधकस्य मन्त्रोऽपि अंधकारावृत एवास्ति । इति बोध्यम् ।

कुण्डलिन्याः मूलाधारात् ब्रह्मरंध्रं यावत् गमनागमनक्रमं भावयन् तस्मिन्नेव मनोलयकरणं मन्त्रशिखा । यथा आगमरहस्ये—

मूलकंदे तु या देवी भुजगाकाररूपिणी ।
तदभ्रमावर्तवातो यः प्राण इत्युच्यते बुधैः ।।
झिल्ली चाव्यक्तमधुरो कूजन्ती सततोस्थिता ।
गच्छन्ती ब्रह्मरंध्रं सा प्रविशन्ती स्वकेतनम् ।।
यातायातक्रमेणैव कुर्यात्तत्रमनोलयम् ।
तेन मन्त्रशिखायाता सर्वमन्त्रप्रदीपिका ।।
तमः पूर्णे गृहे यद्वन्न किंचित् प्रतिभासते ।
शिखाहीनस्तथा मन्त्रो न सिद्ध्यति कदाचन ।।

(भा० १ पृ० १७६)

## (३१) मातृकामाला

पूर्वोक्तेषु मालाभेदेषु प्रथमेयं स्थिरमालेतिकथ्यते । तान्त्रिकेषु प्रसिद्धेयं मातृकामयीमाला सूक्ष्मतरा रहस्यमयी चास्ति, एतस्मादेवकारणात् लोके अप्रचलितास्ति सामान्येन । अस्मिन् विषये तोडलतन्त्रस्य कथनं यथा— शिवस्यान्यतमे स्थाने सहस्रारपद्मकर्णिकायां यदा हंस इति मन्त्रेण पूरकं कुर्वता साधकेन चिच्छक्तिरूपा कुण्डलिनी समानीयते तदा अकारादिक्षकारान्त-वर्णमयी सा कुण्डलिनी मालाकाराभूत्वा शिवेन संवेष्टिता भवति । इयमेव वर्णमयी माला । अत्र ध्यातव्यं यत् कुम्भकावस्थायामेवेयं प्रयोक्तव्या जपार्थमन्यथा तु रेचने सा कुण्डलिनी स्वस्थानमागच्छति येन माला छिन्ना भवति ।

अनया मालया जपस्य पद्धतिः श्यामारहस्ये वर्णितः[२] । स च पद्धतिर्द्विधोक्तः । यथा—

(१) आदौ स्वेष्टमन्त्रमुच्चार्य ततः परं सविन्दुवर्णमुच्चरेत् । एवं आदिक्षान्तं अनुलोमविलोम क्रमेण जपेत्[३] ।

(२) आदौ सविन्दुवर्णमुच्चरेत् ततः मन्त्रं जपेदनेनापि प्रकारेण आदिक्षान्तं अनुलोमविलोमाभ्यां जपेत् ।

---

१. तोडलतन्त्रं—६/१५-२० ।

२. श्यामारहस्ये तृतीये परिच्छेदे (पृ० ११६७) यथा—

(१) मन्त्रेणानन्तरितं वर्णं वर्णेनानन्तरितं मनुम् ।
कुर्याद्वर्णमयीं मालां सर्वमन्त्रप्रदीपिनीम् ॥

(२) सविन्दुवर्णमुच्चार्य पश्चात् मन्त्रं जपेत् सुधीः ।
अनुलोम विलोमक्लृप्तया वर्णमालया ॥
क्षमेरुकं जल्पयित्वा जपेन्नातिलंघयेत् ॥

३. तु० पुरश्चर्यार्णवे द्वितीये खण्डे पृ० ४३० ।

क्षवर्णोऽयमेरुरस्ति तस्योल्लंघनं न कर्तव्यम् । अतश्च इत एव विलोमयेत् । अष्टोत्तरशतकरणे आदावेव वर्गाष्टकं प्रयोजयेत् । यथोक्तं —

**अष्टोत्तर जपादादौ वर्गाष्टकं प्रयोजयेत् ।।**

श्यामा० पृ० १७७

वर्गाष्टकं यथा—अवर्गः, कवर्गः, चवर्गः, टवर्गः, तवर्गः, पवर्गः, यवर्गः, शवर्गश्च । एतेषां वर्गाणामाद्यक्षराः प्रयोक्तव्याः (अ क च ट त प य श)।

विचारयति हि **कामधेनुतन्त्रं**[1] भिन्नक्रमेण यथा—आदिक्षान्तान् वर्णान् चित्रिण्यादिनाडीषु पूर्वक्रमेण क्षमेर्वन्तान् संस्थाप्य, वर्णमयीमाला निर्मीयते । अत्राप्यष्टोत्तरशतकरणे विधानान्तरं उक्तं पुरश्चर्यार्णवे (पृ० ४३०) । तद्यथादौ क्लीबचतुष्टयं अनुलोमविलोमक्रमेण जपेत् । क्लीबचतुष्टयं तु ऋ ॠ ऌ ॡ एते वर्णाः मन्तव्याः । अपि च श्रीमायाकामवाग्बीजानां अनुलोमविलोमक्रमेण जपादष्टोत्तरशतं क्रियते[2] ।

एषा माला सुषुम्णामध्यमवर्तिन्या चित्रिण्या नाड्या ग्रंथिता भवेत् । यथोक्तं—

**चित्रिणी विषतन्त्वाभा ब्रह्मनाडी गता तु या ।**
**तया संग्रथिता ध्येया सर्वकामफलप्रदा ।।**

पुरश्चर्यार्णवः पृ० ४३०

## (३२) मानसोपचारः

मनसा उपचर्यते यत् मनसा भावनया उपचारः स च द्विधा विशदीकृतः परशुरामकल्पसूत्रद्वितीयावृत्तिकारेण—

---

१. कामधेनुतन्त्रम्—२४।३-४ ।

२. पुरश्चर्यार्णवः—पृ० ४३०

(१) कल्प्यमानं द्रव्यजनितं सुखविशेषं कुर्यात् उत्पादयेत् इत्यर्थः। (पृ० १३८)।

(२) उपचारशब्दः आराधनायां, सेवायां, उत्कोचे, उपचर्यायां पूजाद्रव्ये च प्रयुज्यते—(पृ० ३८६)।

अतः मानसोपचारशब्दस्तु भावनयैव कल्प्यमानपूजाद्रव्येण सेवया च इष्टदेवस्य सुखोत्पादनकल्पनमित्यर्थं दर्शयति।

## (३३) मानसजपः

पूजायां जपक्रिया सर्वाधिका महत्त्वशालिनी भवति। जपस्य षड्विधत्वमुक्तं श्रीविद्यारत्नाकरे मानसजपोऽपि तेषामन्यतमोऽस्ति यथा—

जपस्तु षड्विधः प्रोक्तस्तत्प्रकारोऽयमुच्यते।
वाचिकं मानसं चैव यौगिकं योगवाचिकम्॥
योगमानसिकं चैव वाङ्मानसयौगिकम्।
वाचा केवलयोच्चार्य मन्त्रं देवीं विभाव्य च॥
जपेद् यत् परमेशानि! वाचिकं तत् प्रकीर्तितम्।
देव्या रूपं च संचिन्त्य सावधानेन चेतसा॥
मन्त्रस्याप्यनुसंधानं मानसं परिकीर्तितम्।
त्रिस्थानेन त्रिबीजानि क्रमात् संचिन्त्य मार्गतः॥
आरोहो यौगिकं प्रोक्तमुच्यते योगवाचिकम्।
लक्ष्ये मनः समायोज्य वाचा मन्त्रं जपेच्छिवे॥
योगवाचिकमेतत् स्याद्योगमानसिकं शृणु।
लक्ष्येण मानसं पूर्वं संयोज्य मनसा जपन्॥
योगमानसिकं विद्यादन्यदपि चोच्यते।
मनसापि जपेन्मन्त्रं बीजानारोहणक्रमात्॥
वाङ्मानसयोगाख्यं जपमेतदनुत्तमम्॥

मानसजपः सर्वावस्थासु कर्तुं शक्यते । यतोहि मानसजपकाले बाह्यशरीरस्यासंबन्धात् शुध्यादि विचारः न क्रियते । अतएव विष्टरस्थ एव साधकः मानसजपं करोति ।

## (३४) मुखशोधनम्

मिथ्यासंभाषणादिभिः दूषिता जिह्वा मुखशोधनमन्त्रेण विशुद्धा भवति । अतएव मुखशोधनमन्त्रजपविधानं जपादौ दत्तम् । यथोक्तं—

शाक्तो वा वैष्णवो वापि गाणपः सौर एव वा ।
शैवो वा त्वन्यभक्तो वा मुखशोधनमाचरेत् ।।
मुखशोधनमात्रेण जिह्वामृतमयी भवेत् ।।
अन्यथा दूषिता जिह्वा मिथ्यासंभाषणादिभिः ।
भक्ष्याभक्ष्यैश्च कलहे रतः संशोधनं चरेत् ।।
दशवारं जपेनास्य जिह्वामृतमयी भवेत् ।।

आ० र० भा० १ पृ० १८४

मुखशोधनमन्त्रो देवता भेदेन विभज्यते ।

## (३५) मूलाधारः

पुद्गल शरीरस्थेषु षट्चक्रेष्वादिचक्रं लिंगाद्द्व्यंगुलमधः गुदछिद्राद्द्व्यंगुलमुपरि मेरुदण्डस्य मूले सुषुम्णाया उद्गमस्थाने इदगाधारचक्रं विराजते । इदं चक्रं इडापिंगलासुषुम्णाख्यानां नाडीनां संगमस्थानम् युक्तत्रिवेणीतिनाम्ना विख्यातम् ।

चतुर्दलात्मकोऽयं चक्रपद्मः सुवर्णवद्भासितान्—वं शं षं सं इति वर्णान् धारयति । अस्य पत्राणि परमानन्दसहजानन्दविरागानन्दाख्यानि आनन्दस्वरूपाणि च सन्ति[२] ।

———————

१. The Serpent Power—पृ० ११५ ।

२. वही पृ० ११६ ।

अस्य पद्मस्य कर्णिकायां अष्टशूलावृतं चतुर्भुजात्मकं धरामण्डलं वर्तते, तस्याभ्यन्तरे अधः प्रभागे, चतुर्भुजालङ्कृतं, ऐरावतारूढं पीतवर्णात्मकं, वज्रहस्तं, धराबीज संस्थितमस्ति। धराबीजस्य बिन्दोः पार्श्वे रक्तवर्णो बालब्रह्मास्ति। सः चतुर्भिर्हस्तैः दण्डकण्डलुरुद्राक्षमाल्याभयमुद्राश्च वहति।

अस्ति च तस्मिन् परिस्तरे रक्तः पद्मः तन्मध्ये चक्राधिष्ठातृ-शक्तिर्डाकिनी विराजते। सापि रक्तवर्णास्ति। अथ च सा स्वबाहुभिः शूलखट्वांगखड्गचषकान् वहति।

धरामण्डलस्य परिस्तरणमध्ये प्रकाशमानं त्रिकोणसदृशं किमपि यन्त्रमस्ति। तस्मिन् यन्त्रे कामवायुबीजे रक्तवर्णे विद्येते। तदुपरि च श्यामवर्णं स्वयंभूलिंगं कुण्डलिन्या सार्धत्रिवलयेनावृतं वर्तते। अस्य लिंगस्योपरि ऊर्ध्वबिन्दौ महाप्रकृतिरूपा चित्कलास्ति।

अयमेव संग्रहेणाधारचक्रस्य परिचयः।

## (३६) यागस्थानम्

देवतानां गुणप्रकृतीर्विचार्य किञ्च कतिपयरहस्यानुभूतिमाधारीकृत्य तन्त्रशास्त्रकारास्तासां यजनस्थलविशेषान् निर्दिष्टवन्तः। महामहिममय्याः मूलाव्यक्तप्रकृतिस्वरूपाया आद्यायाः यजनस्थलानां निर्देशो यथा—

(१) **एकलिंगम्—**

**पंचक्रोशान्तरे यत्र न लिंगान्तरमीक्षते।**
**तदेकलिंगमाख्यातं तत्र सिद्धिरनुत्तमा॥**

श्या० र० तृ० परि०

अत्र लिंगशब्देन शिवलिंगं गृह्णीयात्।

---

१. The Serpent Power—पृ० ३५५।

(२) **श्मशानम्**—यथोक्तं त्रिशक्ति रत्नाकरे (पुरश्चर्या० ७३२)—

**दह्यन्ते व्यसवो यत्र शवकीलकसंकुले ।**
**गृध्रगोमायुकाकाद्यैर्मांसलुब्धैर्यदावृतम् ।।**
**तत् श्मशानमिति ख्यातं पिशाचगणसेवितम् ।**
**काकादिनीडसंयुक्तं कृत्तिच्छन्नादिसंयुतम् ।।**

(३) **शून्यागारं**—तत्रैव—

**नागरैर्दूरनिर्मुक्तं साध्यसोद्वेगकारकम् ।**
**सौधसंरूढघासाढ्यं शून्यागारं तदुच्यते ।।**

(४) **चतुष्पथः**—**चतुष्पथः स विज्ञेया यत्रास्ते तारिणी शिला ।**

अत्र चतुष्पथे रात्रौ साधना करणीया यथोक्तं तत्रैव—

**चतुर्णां च पथा यत्र संयोगो युगपद्भवेत् ।**
**तच्चतुष्पथमित्युक्तं रजन्यामिष्टदायकम् ।।**

उक्तानां चतुर्णां यागस्थलानां विषये—

**पूर्वपूर्वमिदं शस्तं जघन्यश्चोत्तरोत्तरम् ।।**

इत्यप्युक्तं तत्रैव ।

(५) **बिल्वमूले**—श्रीफलवृक्षस्य छायायामित्यर्थः ।

(६) **पर्वते** ।

(७) **देवागारे**— अत्र इष्टदेवस्यागार एव बोध्यम् न तु यस्य कस्यचिद्देवस्यागारे ।

(८) **नदीतीरे** ।

(९) **शवस्योपरि**—काल्याः पूजने एव ।

(१०) **मुण्डे**—अत्र शवमुण्डमिति विज्ञेयम् ।

(११) **कण्ठपूरितजले**—जलाशये आकण्ठपूरितजलमध्येतिष्ठन्नपि-आद्यायाः पूजनं साधकः करोति ।

(१२) **संग्रामभूमौ**—आद्यायाः संहाररुपत्वादत्रापि ।

(१३) **योनौ** ।

(१४) **विजनवने** ।

(१५) **रम्यस्थले** ।

(१६) **ऊषरे** ।

(१७) **स्वगृहे** ।

(१८) **अश्वत्थसन्निधौ**– अश्वत्थवृक्षस्यापि पार्श्वे आद्यायाः पूजनं भवति ।

एतेष्वन्यतमे स्थाने महाकाल्याः पूजनं साधकः कुर्यात् । अपरमपि पूजास्थलमुक्तं **कुमारीतन्त्रे**—(पुरश्चर्यार्णवः पृ० ७३३) ।

यद्यथा —

**मनोरमे दिव्यगेहे सिन्दूरादिभिरङ्कितेे ।**
**खड्गशूलगदाकर्त्रीचामरव्यजनादिभिः ॥**
**वितानधूपसंकीर्णे कृष्णागुरुसुवासिते ।**
**युवतीनां सुरापीनां वैश्यानां लास्यशोभिते ॥**
**शंख घण्टारवाकीर्णे दीपावलिविराजिते ।**
**एवं भूते गृहे पूजा कालिकायाः सुशोभना ॥**

## (३७) ब्रह्मरन्ध्रम्

मूलाधारादुत्थितानां नाडीनां मध्ये तिस्र एव नाड्यः प्रधानाः । यथा—**"मेरोर्बाह्यप्रदेशे शशिमिहिरशिरे सव्यदक्षे निषण्णे"** इति **षट्चक्रनिरूपणं** इत्याख्यग्रन्थस्य वचनानुसारेण मेरूदण्डस्य मूले इडापिंगले सव्यदक्षे विद्येते तन्मध्ये च सुषुम्णा नाडी विराजते । सुषुम्णान्तर्गता चित्रिणी नाडिका एव ब्रह्मरन्ध्रेति विख्याता । यथोक्तं चक्रकौमुद्यां प्रथमे पटले (श्लोक १३)—

**सुषुम्णान्तर्गता ध्येया चित्रिणी ब्रह्मनाडिका ।**

**ब्रह्मरन्ध्रम् विदुस्तस्यां कुण्डलीगमनायनम् ।।**

अतोहि ब्रह्मरन्ध्रस्यारंभस्थानं मूलाधार एवास्ति । तस्यान्तस्तु शून्यचक्रे भवेत् । अनेनैव मार्गेण कुण्डलिनी षट्चक्रभेदक्रमेण परशिवं प्रति गच्छति । यथोक्तं वाचस्पत्यमित्यभिधानकोशेऽस्य शब्दस्य विवेचनावसरे—

**"तयोर्ध्वमायन्नमृतमेमि" इति श्रुत्या तद्रन्ध्रेण प्राणातिक्रमणे ब्रह्मलोकप्राप्तेरुक्तत्वात् तथात्वं ।"**

## (३८) विशेषार्घ्यम्

श्रीपात्रापरपर्यायं वीराणां कारणपात्रम् ।

## (३९) विशुद्धचक्रम्

षोडशदलात्मकोऽयं पद्मः कण्ठदेशे विराजते । स्वराः (अ—अः) एवास्य पर्णानि सन्ति । पद्मस्य वर्णः धूम्रोऽस्ति । दलानि च रक्तवर्णात्मकानि सन्ति ।

अस्य बीजकोशे नभोमण्डलं वर्तते तच्च वृत्ताकारं श्वेतवर्णश्चास्ति । अस्याभ्यन्तरे चन्द्रमण्डलं वर्तते । तस्योपरि हं इत्याकाशवीजं वर्तते धवलवर्णात्मकम् । धवलपरिधानयुक्तं चतुर्बाहुयुतं वीजंअंकुशपाशवराभयानि दधद् विराजते ।

तदभ्यन्तरे व्याघ्रचर्मास्तृतवृषभोपरि सदाशिवोऽर्धनारीश्वररूपेण विराजते । तस्य पूर्वभागः धवलोऽस्ति अपरार्धभागश्च स्वर्णाभः । स च शिवः पञ्चमुखः दशभुजश्चास्ति । बाहुभिः शूलटंकखड्गवज्रदहननागेन्द्रघंटांकुशपाशान् अपि चाभयमुद्रां धारयति । सः भस्मलिप्तः नागमालाधरश्चास्ति । तस्य सम्मुखस्थात् चन्द्रमसोऽमृतविन्दवः प्रवहन्ति ।

पद्मस्यान्तरस्थचन्द्रमण्डले अस्थिगता श्वेताभा चतुर्मुखी, चतुर्बाहुवती त्रिनेत्रा पीतवस्त्रावृता, धनुर्बाणपाशांकुशानि दधती चक्राधिष्ठात्री शाकिनी शक्तिः वसति ।

## (४०) विश्वामित्रकपालम्

संग्रामे मृतस्य चाण्डालस्य शिरोऽस्थि विश्वामित्रकपालमित्यभिधानेन कौलाचारे प्रसिद्धम् । नारिकेलकपालमपि विश्वामित्रकपालं कथ्यते ।

## (४१) बीजम्

यद् ध्वनिचिह्नं शब्दविशेषो वा यस्य देवस्य मूलमन्त्ररूपेण स्वीक्रियते तत्तस्य बीजं इति कथ्यते । बीजं तु देवतायाः ध्वन्यात्मकं सूक्ष्मं च स्वरूपमस्ति । तस्योपासनेन तद्देवस्य साक्षात्कारं कुर्वन्ति साधकाः ।

अस्मिन् विषये विवरणविशेषः "**देवता**" इति ग्रन्थस्य "**बीज**" शीर्षक निबन्धे द्रष्टव्यः[१] ।

## (४२) शंखावर्तक्रमः

शंखस्यावर्तः शंखावर्तः तद्वत् क्रमो यस्य सः । अत्र प्रकृतप्रसंगे अस्यार्थः शंखस्यान्तः प्रभागे यदावर्तनं दक्षिणात् वामं प्रति भवति तद्वत् त्रिकोणं **विलोकयेत्** इति बोध्यः ।

## (४३) शक्तिः

वामाचारे साधकानां सहायिका स्त्री शक्तिशब्देनाभिधीयते तस्याः लक्षणं शब्दकल्पद्रुमे यथा—

---

१. देवता, लेखकः A Recluse of Vindhyachal ।

—पृ० ८५-९३ ।

शक्तिश्च कथ्यते देवि ! शृणुष्व सुरसुन्दरि ।
त्रयोदशाब्दादूर्ध्वं या पंचविंशतिवार्षिकी ।
अप्रसूताविशेषेण पंचमेऽपि प्रिये ! भवेत् ।।

सा पंचमे मैथुने दक्षा भवेत् । शक्तिः सुन्दरी तु भवेदेव प्रसूताप्रसूतावा स्यात्, न दोषोऽस्त्यत्र । यथोक्तं—

सुन्दरी तु विशेषेण प्रसूतावाप्रसूतिका ।
अवश्यं पञ्चमं कुर्यात् शक्तिमात्रे महेश्वरि ।।

(शब्दकल्पद्रुमे)

शक्तेर्विशदं लक्षणमुद्धृतं सदाशिवदीक्षितेन कर्पूरस्तवराजस्तोत्रस्य भाष्यं कुर्वता (पृष्ठ ६२)—

तरुणीं सुन्दरीं रम्यां चंचलां कामलोलुपाम् ।
कालीभक्तां जपासक्तां महाकामकुतूहलाम् ।।
दर्शनान्मोहिनीं साध्वीं कटाक्षादिप्रमोचिनीम् ।
नायिकाष्टतुल्ययुक्तां क्रोधमात्सर्यवर्जिताम् ।।
सर्वदोषविहीनाङ्गीं विकारपरिवर्जिताम् ।
जपासक्तां समासाद्य सर्वं संसाधयेत् शिवे ।।

शक्तिस्तु अदीक्षिता न भवेत् । अपितु दीक्षिता एव प्रयोक्तव्या—

अदीक्षिताङ्गनासंगात् सिद्धिहानिर्भवेत् शिवे ।
तस्मात् सर्वप्रयत्नेन दीक्षयेन्निजकौलिनीम् ।।

गन्धर्वतन्त्रम् ३८ २

## (४४) संध्या

दिवारात्रस्य संधिकालः संध्येति कथ्यते । यदुक्तं कालनिर्णयप्रसङ्गे वृहद्वाराहीसंहितायां[1]—

---

१. वृहद्वाराहीसंहिता अ० ३ श्लोक १ पृ० १२५ व्यंकटेश्वर प्रकाशनम् ।

**अर्धास्तमितानुदिनात् सूर्यादस्पष्टभं नभो यावत् ।**

**तावत् संध्या कालः ........................ ।।**

क्वचित्तु सूर्यनक्षत्रवर्जित एव कालः संध्याकालः उक्तः । यथा—

**अहोरात्रस्य संधिः सूर्यनक्षत्रवर्जितः ।**

**सा तु संध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः ।।**

कर्मठगुरुः पृ० ९

अस्मिन् काले सवितृमंडलान्तर्गतब्रह्मस्वरूपस्यैवोपासना भवति । अतएव संध्याशब्दस्य निर्वचनमेवं कृतम्[1]—

(१) सम्यक्ध्यायन्ति सम्यक्ध्यायते वा परं ब्रह्म यस्यां सा संध्या ।

(२) संधीयते परं ब्रह्म सा संध्या सद्भिरुच्यते । कालभेदे संध्याया भागत्रयमुक्तम्[2] । यथा—प्रातः संध्या विषये—

**उत्तमा तारकोपेता मध्यमा लुप्ततारका ।**

**अधमा भास्करोपेता प्रातः संध्या त्रिधा मता ।।**

सायं संध्याविषये—

**उत्तमाभास्करोपेता मध्यमा लुप्तभास्करा ।**

**अधमा तारकोपेता सायं संध्या त्रिधा मता ।।**

एवमेव—

**अध्यर्धयामादासायं संध्या माध्याह्निकी भवेत् ।।**

संध्यावन्दनं च द्विधा कुर्वन्ति पण्डिताः वैदिकरीत्या तान्त्रिकरीत्या च । वैदिकी संध्या तु सामान्यास्ति सर्वेषां साधकानां कृते, किञ्च तान्त्रिकी

---

१. कर्मठगुरु पृ० ९ ।

२. तत्रैव—धर्मसिन्धोरुद्धरणम् ।

संध्या तान्त्रिकानां कृते शस्ता। परमियं तान्त्रिकीसंध्या वैदिकीसंध्यावंदनानन्तरमेव क्रियते।

## (४५) स्तवः

सर्वसत्तासम्पन्नमिष्टदेवं सर्वगुणोपेतं भावयित्वा सुन्दरतमं रूपं कल्पयित्वा तस्य प्रभुत्वव्याख्यानमेव स्तोत्रं कथ्यते। यथा कुलार्णवे (१७) निर्वचनम्—

**स्तोकस्तोकेन मनसः परमप्रीतिकारणात्।**
**स्तोतृसंतारणाद्देवि ! स्तोत्रमित्यभिधीयते॥**

अन्यदपि व्याख्यातोऽयं शब्दः—यथा[1]—"**स्तूयतेऽनेनेति**" व्युत्पत्त्या स्तोतेः "**दाम्नीशस्युज**" (पा० ३/२/१८२) इति सूत्रेण ष्ट्रन् प्रत्यये कृते व्युत्पद्यतेस्तोत्रशब्दः। वाचस्पत्येऽपि "**स्तवे गुणकर्मादिभिः प्रशंसनेऽपरः**" इत्युक्त्वाऽस्य चतुर्विधत्वमुक्तं यथा च—

**द्रव्यस्तोत्रं कर्मस्तोत्रं विधिस्तोत्रं तथैव च।**
**तथैवाभिजनस्तोत्रं स्तोत्रमेतच्चतुष्टयम्॥**

म० पु० १४५-२१३

द्रव्याद्युपाधितया स्तवस्य चतुर्विधत्वमुक्तं, स्तुतिसाधनवाक्येगुणिनमुपसर्जनीकृत्य तन्निष्ठानां गुणानां प्राधान्येन कथनरूपं ऋग्वेदे लक्षितम्। हलायुधकोषेऽपि स्तूयतेऽनेनेति व्युत्पत्तिं प्रदर्श्य ष्ट्रन् प्रत्यये जाते व्याकृतोऽस्ति स्तुतिशब्दः—

"**अर्थवादः स्तुतिः ईडानुतिर्विकत्थनम् स्तवः श्लाघावनेर्णति**" लिखित्वा व्याख्याता।

शौनकेनाप्युक्तं[2]—

**स्तुतिस्तु नाम्ना रूपेण कर्मणा बान्धवेन च॥**

---

१. संस्कृते पञ्चदेवानां स्तोत्राणि पृ० ४१।

२. बृहद्देवता १।७२।

द्वारकाप्रसादचतुर्वेदि कृते संस्कृतशब्दार्थकौस्तुभे च—

**स्तोत्रं प्रशंसा विरुदावलिः प्रशंसात्मकं गीतम् ।**

**कविता स्तुत्यात्मकश्लोकाः** (सं० श० कौ० पृ० १२३६)।

इत्थं स्पष्टं यत् स्तोत्रशब्दः पूज्यप्रशंसात्मकेषु वाक्येषु प्रयुज्यते ।

## (४६) स्वयंभूलिंगम्

योगतन्त्रे मूलाधारात् सहस्रार—(शून्यचक्र—) पर्यन्तं चतुष्पीठानि परिकल्पितानि-कामरूपपूर्णगिरिउड्डियानजालन्धराख्यानि । तत्र मूलाधारे उद्भूते प्रकटिते वा कामरूपपीठे वा अभिव्यक्तं चैतन्यं स्वयंभूलिंग मिति कथ्यते ।

शिवशक्ती एवक्रमेणाम्बिकाशान्ता कथ्येते । ये साम्यभावापन्ने भूत्वा विन्दुत्वेन परिणते स्तः । येन पामार्थिकं चैतन्यं ज्योतिर्लिङ्गमिति प्राकट्यं गच्छति । अयमेव विन्दुः तान्त्रिकपरिभाषायां कामरूपपीठत्वेन प्रसिद्धोऽस्ति । अस्मिन्नेवस्थलेऽभिव्यक्तं चैतन्यं स्वयंभूलिंगमिति नाम्ना परिचीयते[1] ।

अस्य स्वरूपस्थितिविषये **षट्चक्रनिरूपणं** इति ग्रन्थः—एवं विशदयति[2]—

मूलाधारचक्रस्थत्रिकोणमध्ये काञ्चनावयव इवस्निग्ध अधोमुखः, ज्ञानध्यानाभ्यां प्रकाश्यः ज्ञानेन निर्गुणरूपप्रकाशः ध्यानेन सगुणरूपप्रकाशः, प्रथमकिसलयाकाररूपः अर्थात् स्थूलमूलात् सूक्ष्माग्रपर्यन्तं चम्पककुसुममध्य-स्थित शलाकावदुन्नतः, श्यामवर्णश्चेत्यर्थः[3], विद्युत्पूर्णचन्द्रविम्बोद्भूतोत्तरापर-रहितः प्रकृष्टकिरणसमूहेन मृदुप्रवाहविशिष्टप्रकाशवत् प्रकाशवान्, काशीवास-

१. शक्तिभाष्य का अध्ययन पृ० ५८ ।

२. षट्चक्रनिरूपणम् श्लोक ९ भाष्यम् द्रष्टव्यम्

३. क्वचित् स्वयंभूलिंगम् अलक्तकप्रभम् वर्णितम् । द्रष्टव्यं तत्रैव पृ० १६ ।

वदत्रापि सुखं भुञ्जानः, कामप्रफुल्लभावविशिष्टो वा अयं विश्वेश्वरः स्वयंभूः कामबीजोपरि विराजते ।

अस्य स्वयंभूलिंगस्य मुखमेव ब्रह्मद्वारमितिविश्रुतम्[1] ।

## (४७) सामान्यार्घ्यम्

अर्घ्यं नाम देवपूजनाय विहितं जलम् । तच्च तीर्थजलं, गंगादि दिव्यसरिज्जलं वा मन्त्रपूतं जलं वा भवेत् । तच्चार्घ्यमत्र कालीपूजायां द्विधा भवतिसामान्यार्घ्यम् विशेषार्घ्यश्च । तत्र सामान्यर्घ्यन्तु पूजायाः सर्वेष्वंगेषु प्रयुज्यते, विशेषार्घ्यमवसरविशेषे एव ।

सामान्यार्घ्यस्य वर्णनं **श्यामारहस्यादिषु** ग्रन्थेषु कृतं वर्तते तद्यथा—

विशिष्टाकारकं यन्त्रं निर्माय अधारशक्तिं संपूज्य, हुं इत्यस्त्रमन्त्रेण संशोधितं पात्रं नम इति हृन्मन्त्रेण जलेन प्रपूर्य यन्त्रे संस्थाप्य **गंगेत्यादिना** तीर्थान्यावाह्य प्रणवेन गन्धादीन् प्रक्षिप्य धेनुमुद्रां प्रदर्शयेत्[2] । अनेनैव जलेन द्वारदेवताः पूज्यन्ते[3] ।

## (४८) साधकेन्द्रः

सधकानामिन्द्रः श्रेष्ठ इति साधकेन्द्रः इति व्युत्पत्या सर्वेषु सौरगाणपत्यादिषु साधनापद्धतिषु प्रवृत्तेषु साधकेषु सर्वश्रेष्ठः यः साधकः स साधकेन्द्र इति कथ्यते । यथोक्तं कुलार्णवे (२/७-८)—

---

१. तत्रैव पृ० २३ ।

२. श्यामारहस्यं प्र० परि० पृ० २० ।

३. सामान्यर्घ्येण देवेशि पूजयेद्वारपार्श्वयोः ।

तत्रैव ॥

**वैष्णवादुत्तमं शैवं शैवाद्दक्षिणमुत्तमम् ।**
**दक्षिणादुत्तमं वामं वामात् सिद्धान्तमुत्तमम् ।**
**सिद्धान्तादुत्तमं कौलं कौलात् परतरं नहि ।।**

इत्यादि वचनात् **"कौलोमार्गः परमगहनः योगिनामप्यगम्यः"** इत्यादि प्रमाणाच्च कौल एव श्रेष्ठोऽस्ति । **"काल्युपासका यत्र तत् कुलं परिकीर्तितम्"** इति **शक्ति संगम**—(कालीखण्डे ३/३२) प्रमाणात् काल्युपासका एव कौला इति निर्णयः । त एव साधकेषूत्तमाः सन्ति ।

## (४६) स्वाधिष्ठानचक्रम्

अस्य चक्रस्य स्थानं कटिस्थाने वर्णितमस्ति । सिन्दूरवर्णात्मकमिदं चक्रं सविन्दु **बभमयरल**वर्णविराजितषट्पत्रात्मकमस्ति । ते च वर्णाः विद्युन्निभाः सन्ति । अस्य पद्मस्य कर्णिकायां अष्टदलपद्मस्थः जलप्रान्तोऽस्ति । अस्य केन्द्रे अर्धचन्द्रो विराजते । अयं जलप्रान्तः श्वेतवर्णात्मकोऽस्ति । तदभ्यन्तरे **व**मिति वरुणवीजे मकरारुढः शूलहस्तःविराजते । तदभ्यन्तरे गरुडस्थो विष्णुः स्वबाहुभिः शंखचक्रगदाः धारयन्, स्ववक्षःस्थले कौस्तुभं च धारयन् स्थितोऽस्ति । अत्रैवास्य चक्रस्याधिष्ठात्री राकिनी रक्तपद्मे विराजते । सा च श्यामवर्णा, चतुर्बाहुभिः सुशोभितास्ति । बाहुभिश्च शूलवज्रडमरुटंकानि शस्त्राणि धारयति । अति भयावहा सा शुक्लान्नेन प्रसीदति[1] ।

## (५०) सुषुम्णा

आमूलात् शून्यचक्रपर्यन्तं मेरुदण्डमध्यगा सती इयं नाडी वहति । इयं त्रिगुणात्मिका वर्णिता योगशास्त्रे । अस्याः सव्यदक्षे इडापिंगले द्वे नाड्यौ स्थिते स्तः । ते च चन्द्रसूर्यस्वरूपे । यथोक्तं **षट्चक्रनिरूपणे**—

---

१. **द्रष्टव्यम्—षट्चक्रनिरूपणग्रन्थे स्वाधिष्ठानचक्रम् ।**

**मेरोर्बाह्यप्रदेशे शशिमिहिरशिरे सव्यदक्षे निषण्णे ।**

**मध्ये नाडी सुषुम्णा त्रितयगुणमयी चन्द्रसूर्याग्निरूपा ।।**

इयमेव नाडी कुण्डलिन्या गमनागमनमार्गोऽस्ति । यथोक्तं मूले - **"सुषुम्णापथात्"** ।

## (५१) सेतुः

सेतुरिति पारिभाषिकः शब्दोऽस्ति तान्त्रिक-वाङ्मये । यथा लोके सेतुः सलिलस्य नियमनं संरक्षणं च करोति तथैवायं सेतुः मन्त्राणां पुण्याब्धिं रक्षति अन्यथा तु मन्त्रफलं क्षरत्येव । अतः सेतु मन्त्राणां जपः मूलमन्त्रजपात् पूर्वंविधेयः । यथोक्तं—

**स्रवत्यरुद्धं पूर्वं हि परस्ताच्च विशीर्यते ।**

**निःसेतु सलिलं यद्वत् क्षणान्निम्नं प्रसर्पति ।**

**मन्त्रस्तथैव निःसेतुः क्षणात् क्षरति जापिनाम् ।।**

**अजप्त्वा हृदि देवेशि ! यो वै मन्त्रं समुच्चरेत् ।**

**न तस्य जायते सिद्धिः कालेनापि महेश्वरी ।।**

आगमरहस्यम्, भा० १ पृ० १८४

सेतुः वर्णभेदेन चतुर्धा भवति यथा—

**विप्राणां प्रणवः सेतुः क्षत्रियाणां तथैव च ।**

**वैश्यानां फडर्णः स्यान्माया शूद्रस्य कथ्यते ।।**

(आ० र० भा० १ पृ० १८३)

अपरोऽपि प्रकार उक्तः—(पुरश्चर्याणवे पृ० ५३२)—

**मन्त्राणां प्रणवः सेतुर्द्विजातीनां प्रकीर्तितः ।**

**चतुर्दशस्वरोऽन्येषां चन्द्रानुस्वारसंयुतः ।।**

●●

# परिशिष्टम्

## तृतीयम्

## अथ कुलार्णवोक्तशान्तिस्तवः



यजन्ति देव्यो हरपादपङ्कजम् ।
प्रसन्नधामामृत मोक्षदायकम् ।।
अनन्तसिद्धान्तमय प्रबोधकं ।
नमामि चाष्टाष्टकयोगिनीगणम् ।।
योगिनीचक्रमध्यस्थं मातृमण्डलवेष्टितम् ।
नमामि शिरसा नाथं भैरवं भैरवीप्रियम् ।।
अनादिष्टोरसंसारध्वान्तैकध्वंसकारिणे ।
नमः श्रीनाथवैद्याय कुलौषधिविधायिने ।।
आपदो दुरितं रोगाः समयाचारलङ्घनात् ।
ये ते सर्वे व्यपोहन्तु दिव्यचक्रस्य मेलनात् ।।
आयुरारोग्यमैश्वर्य्यं कीर्त्तिर्लभिः सुखं जयः ।
कान्तिर्मनोहरा चास्तु पान्तु सर्वाश्च देवताः ।।
सम्पूजकानांप्रतिपालकानां ।
यतीन्द्रयोगीन्द्रतपोधनानाम् ।।
देशस्य राष्ट्रस्य कुलस्य राज्ञः ।
करोतु शान्तिं भगवान् कुलेशः ।।
नन्दन्तुं साधक कुलाद्वयदर्शका ये ।
सिंहासनाद्युषितशाक्त महान्वया ये ।

नन्दन्तु सर्वकुलकौलरताः परे ये ।
चान्ये विशेषपदभेदकशाम्भवा ये ।।
नन्दन्तु सिद्धगुरवस्तदनुक्रमज्ञा ।
ज्येष्ठान्वया समयिनं वटुकाः कुमार्यः ।।
ये योगिनीप्रवरवीरकुले प्रसूता ।
नन्दन्तु भूमिपतिगो द्विजसाधुलोकाः ।।
नन्दन्तु नीतिनिपुणा निरवद्यनिष्ठाः ।
निर्मत्सरा निरूपमा निरूपद्रवाश्च ।।
नित्यं निरञ्जनरता गुरवो निरीहाः ।
शान्ताश्च शान्तमनसो हृतशोकशङ्काः ।।
नन्दन्तु योगनिरताः कुलयोगयुक्ता ।
ह्याचार्यसामयिकसाधकपुत्रकाश्च ।।
गावो द्विजा युवतयो यतयः कुमार्यो ।
धर्मे चरन्तु निरता गुरुभक्तलोकाः ।।
नन्दन्तु साधककुला ह्यलमात्मनिष्ठाः ।
शापाः पतन्तु समयद्विपि योगिनीनाम् ।।
सा शाम्भवी स्फुरतु कापि भमाप्यवस्था ।
यस्यां गुरोश्चरणपङ्कजमेव सत्यम् ।।

याश्चक्रक्रमभूमिकावसतयोनाडीषु याः संस्थिता ।
याः कायोद्गतरोमकूपनिलया याः संस्थिता धातुषु ।।
उच्छ्वासोर्मिमरुत् तरङ्गनिलया निश्वासवासाश्चया- ।
स्ता देव्यो रिपुपक्षभक्षणरता नन्दन्तु कौलार्चिताः ।।
या देव्यः कुलसम्भवाः क्षितिगता या देवतास्तोयगा ।
या नित्यं प्रथितप्रभाः शिखिगता या मातरिश्वालयाः ।।

या व्योमाहित मण्डलामृतमया याः सर्वगाः सर्वदास्ताः ।
सर्वाः कुलमार्गपालनपराः शान्तिं प्रयच्छन्तु मे ॥
ऊर्द्ध्वे ब्रह्माण्डतो वा दिवि गगनतले भूतले वा तले वा ।
पाताले वानले वा सलिलपवनयोर्यत्र कुत्र स्थिता वा ॥
क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादिकेन ।
प्रीता देव्यः सदा नः शुभ बलिविधिना पान्तु वीरेन्द्रवन्द्याः ॥
ब्रह्मा श्रीःशेषदुर्गागुहवटुकगणा भैरवाः क्षेत्रपाद्याः ।
वेतालादित्यरुद्रग्रहवसुमनुसिद्धाप्सरोगुह्यकाद्याः ॥
भूता गन्धर्वविद्याधरऋषिपितृयक्षासुराः किन्नराद्याः ।
योगीशाश्चारणाः किम्पुरुषमुनिवराश्चक्रमाः पान्तु सर्वे ॥
देहस्थाखिलदेवता गजमुखाः क्षेत्राधिपा भैरवाः ।
योगिन्यो वटुकाश्च यक्षपितरो भूताः पिशाचा ग्रहाः ॥
अन्ये भूचरखेचरा दिशिचरा वेलालकाश्चेटका ।
स्तृप्यन्तां कुलपुत्रकस्य पिवतः पानं सदीपश्चरुम् ॥
सत्यञ्चेद् गुरुवाक्यमेव पितरौ देवाश्च चेद् योगिनी ।
प्रीता चेत् परदेवता यदि भवेद्वेदाः प्रमाणं हि चेत् ॥
शाक्तेयं यदि दर्शनं भवति चेदाज्ञाप्यमोघापि चेत् ।
सत्यञ्चापि च कौलधर्मपरमं स्यान्मे जयः सर्वदा ॥
नन्दन्तु साधकाः सर्वे नश्यन्तु कुलदूषकाः ।
अन्तःस्था शाम्भवी मेऽस्तु प्रसन्नोऽस्तु गुरुः सदा ॥
यद्येषा भैरवी देवी यदि भैरवशासनम् ।
यद्येष कुलधर्मः स्यात्तदा नश्यन्तु दूषकाः ॥
यासामाज्ञाप्रभावेण स्थपितुं भुवनत्रयम् ।
नमस्ताभ्यः समस्तभ्यो योगिनीभ्यो निरन्तरम् ॥

पिवन्तु मातरः सर्वाः पिवन्तु कुलसत्तमाः ।
पिवन्तु भैरवाः सर्वे मम देहे व्यवस्थितः ।।
तृप्यन्तु मातरः सर्वाः समुद्राः सगणाधिपाः ।
योगिन्यः क्षेत्रपालाश्च मम देहे व्यवस्थिताः ।।
शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तम्बसंयुतम् ।
कालाग्न्या दिशिवान्तञ्च जगद् यज्ञेन तृप्यतु ।।
द्वारस्था मणिमण्डपस्य परितः श्रीनन्दने कानने ।
शून्यागारविहारकन्दरमठे व्योम्नि श्मशाने स्थिताः ।।
कूपस्थानगताश्चतुष्पथगताः सन्देशसंस्थाश्च ये ।
पङ्क्तार्थावहकेतुमानकुसुमात् गृह्णन्तु ते पान्तु च ।।

**आगमरहस्योक्तं कुलस्तोत्रम्—**

कुलस्तोत्रं पठित्वा तु कुलचक्रं विसर्जयेत् ।
कुलस्तोत्रस्य पाठेन व्यङ्गोऽपि साङ्गतामियात् ।।

**श्री देव्युवाच—**

त्रिपुरा त्रिपुरेशी च सुन्दरी परसुन्दरी ।
श्रीमालिनी च सिद्धाम्बा महात्रिपुरसुन्दरी ।।
प्रकटाख्या तथा गुप्ता तथा गुप्ततरा परा ।
सम्प्रदायकुला कौला रहस्यातिरहस्यगा ।।
परापररहस्या च तथा कामेश्वरी परा ।
भगमालिनी नित्यक्लिन्ना भेरुण्डा वह्निवासिनी ।।
महाविद्येश्वरी दूती त्वरिता कुलसुन्दरी ।
नित्यानीलपताका च विजया सर्वमंगला ।।

ज्वालांशुमालिनी चित्रा वशिनी सुभगाकुला ।
पूर्णाख्या च तथा वत्सा कामेशी मोदिनी तथा ॥
विभा अरुणा देवी जयन्ती कुलभैरवी ।
सर्वेश्वरी तथा कौली वागीशी सर्वकामिनी ॥
सिद्धेश्वरी तथा चोग्रा दुर्गामहिष मर्दिनी ।
स्वप्नावती शूलिनी च मातंगी सुरसुन्दरी ॥
महाकाली महोग्रा च चित्ररूपा महोदरी ।
प्राणविद्या तथैकाक्षी चैकपादा महाङ्कुशा ॥
वामा शिवा तथा ज्येष्ठा सुरूपा चारुहासिनी ।
त्रिखण्डा त्रिशिरा गौरी विन्ध्याचलनिवासिनी ॥
क्षोभिण्युन्मादिनी भद्रा ललिता बहुरूपिणी ।
सर्वसम्पत्करी तारा भवानी विश्ववासिनी ॥
कूटेश्वरी महाविद्याः कथितास्तव भैरव ॥
उपासकान् महोदव शृणु चैकमनाः स्वयम् ।
मनुश्चन्द्रः कुवेरश्च मन्मथस्तदनन्तरम् ॥
लोपामुद्रा मुनिर्नंदी शक्रः स्कन्दः शिवस्तथा ।
क्रोधभट्टारकश्चैव पञ्चमी परिकीर्तितः ॥
दुर्वासा व्याससूयौ च वसिष्ठश्च पराशरः ।
और्वो वह्निर्यमश्चैव निऋतिर्वरुणस्तथा ॥
वायुर्विष्णुः स्वयंभूश्च भैरवो गालवस्तथा ।
अनिरुद्धो भरद्वाजो दक्षिणामूर्तिरेव च ॥
वटुको गणपश्चैव लक्ष्मीर्गङ्गा सरस्वती ।
धात्री शेषः प्रमत्तच उन्मत्तः कुलभैरवः ॥
क्षेत्रपालो हनूमांश्च दक्षो गरुड एव च ।

प्रह्लादः शुकदेवश्च रामो रावण एव च ।
काश्यपः कौत्सकुंभौ च जमदग्निर्भृगुस्तथा ।।
वृहस्पतिर्यदुश्रेष्ठो दत्तात्रेयो युधिष्ठिरः ।
अर्जुनो भीमसेनश्च द्रोणाचार्यो वृषाकपिः ।।
दुर्योधनस्तथा कुन्ती सीता च रुक्मिणी तथा ।
सत्यभामा द्रौपदी च उर्वशी च तिलोत्तमा ।।
पुष्पदन्तो महाबुद्धो बाणः कालश्च मन्दरः ।
कैलासः क्षीरसिन्धुश्च उदधिर्हिमवांस्तथा ।।
नारदश्च महावीराः कथिता वीरसाधकाः ।
महाविद्या प्रसादेन स्वस्वकर्मसमन्विताः ।।
एतेषां वत्स नामानि नित्यं विद्योपसेविनाम् ।
प्रातःकाले शुचिर्भूत्वा यः पठेत् प्रयतः सुधीः ।।
पूजायां वा महापीठे प्रसीदामि कुलप्रिय ।
अशुचिर्वा निरालम्वः सालम्वो वा कुलान्तिके ।।
नित्यपूजाफलं तस्य ददामि वरमीप्सितम् ।
चक्रसंकेतकं वत्स गुरुसंकेतकं तथा ।।
नामसंकेतकं चैव मन्त्रसंकेतकं तथा ।
समयाचारसंकेतमज्ञात्वा यः प्रवर्तते ।।
जपपूजार्चनं होममभिचाराय कल्पते ।
इदं स्तोत्रं पठित्वा तु भवेत् संकेतवान् ध्रुवम् ।।

**अथोत्तरतन्त्रे कालीकवचम्—**

कैलाशशिखरारूढं भैरवं चन्द्रशेखरम् ।
वक्षःस्थले समासीना भैरवी परिपृच्छति ।।

**भैरव्युवाच**

देवेश ! परमेशान ! लोकानुग्रहकारक ! ।
कवचं सूचितं पूर्वं किमर्थं न प्रकाशितम् ॥
यदि मे महती प्रीतिस्तवास्ति कुलभैरव ! ।
कवचं कालिकादेव्याः कथयस्वानुकम्पया ॥

**श्रीभैरव उवाच**

अप्रकाश्यमिदं देवि ! नरलोके विशेषतः ।
लक्षवारं वारितासि स्त्रीस्वभावाद्धि पृच्छसि ॥

**देव्युवाच**

सेवका वहवो नाथ ! कुलधर्मपरायणाः ।
यतस्ते त्यक्तजीवा सा शवोपरि चितोपरि ॥
तेषां प्रयोगसिद्ध्यर्थं स्वरक्षार्थं विशेषतः ।
पृच्छामि वहुशो देव ! कथयस्व दयानिधे ! ॥

**भैरव उवाच**

कथयामि शृणु प्राज्ञे ! कालिकाकवचं परम् ।
गोपनीयं पशोरग्रे स्वयोनिमपरे यथा ।
सर्वविद्यामहाराज्ञि ! सर्वदेवनमस्कृते ! ॥

कालिकाकवचस्य भैरवः ऋषिरुष्णिक्छन्दः अद्वैतरूपिणी श्रीदक्षिण-कालिका देवता ह्रीं वीजं हुं शक्तिः क्रीं कीलकं सर्वार्थसाधनपुरःसरमन्त्रसिद्धौ विनियोगः ।

सहस्रारे महापद्मे कर्पूरधवलो गुरुः ।
वामोरुस्थिततच्छक्तिः सदा सर्वत्र रक्षतु ॥
परमेशः पुरः पातु परापरगुरुस्तथा ।
परमेष्ठी गुरुः पातु दिव्यसिद्धिश्च मानवां ॥

महादेवी सदा पातु महादेवः सदावतु ।
त्रिपुरो भैरवः पातु दिव्यरूपधरः सदा ।।
ब्रह्मानन्दः सदा पातु पूर्णदेवः सदावतु ।
चलच्चित्तः सदा पातु चेलाञ्चलश्च पातु माम् ।।
कुमारः क्रोधनश्चैव वरदः स्मरदीपनः ।
माया मायावती चैव सिद्धौघाः पान्तु सर्वदा ।।
विमलः कुशलश्चैव भीमसेनः सुधाकरः ।
मीनो गोरक्षकश्चैव भोजदेवः प्रजापतिः ।।
कुलदेवो रन्तिदेवो विघ्नेश्वरहुताशनः ।
सन्तोषः समयानन्दः पातु मां मानवासदा ।।
सर्वेऽप्यानन्दनाथान्ताः अम्बान्ता मातरः क्रमात् ।
गणनाथः सदा पातु भैरवः पातु मां सदा ।।
वटुको नः सदा पातु दुर्गा मां परिरक्षतु ।
शिरसः पादपर्य्यन्तं पातु मां घोरदक्षिणा ।।
तथा शिरसि मां काली हृदि मूले च रक्षतु ।
सम्पूर्णविद्यया देवी सदा सर्वत्र रक्षतु ।।
क्रीं क्रीं क्रीं वदने पातु हृदि हुं हुं सदावतु ।
ह्रीं ह्रीं पातु सदाधारे दक्षिणे कालिके हृदि ।।
क्रीं क्रीं क्रीं पातु मे पूर्वे हुं हुं दक्षे सदावतु ।
ह्रीं ह्रीं मां पश्चिमे पातु हुं हुं पातु सदोत्तरे ।।
पृष्ठे पातु सदा स्वाहा मूला सर्वत्र रक्षतु ।
षडङ्गे युवती पातु षडङ्गेषु सदैव माम् ।।
मन्त्रराजः सदा पातु ऊर्द्ध्वाधो दिग्वदिक्स्थितः ।
चक्रराजे स्थिताश्चापि देवताः परिपान्तु माम् ।।

उग्रा उग्रप्रभा दीप्ता पातु पूर्व त्रिकोणके ।
नीला घना बलाका च तथा परत्रिकोणके ।।
मात्रा मुद्रा मिता चैव तथा मध्यत्रिकोणके ।
काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी ।।
बहिः षट्कोणके पान्तु विप्रचित्ता तथाप्रिये ।
सर्वाः श्यामाः खड्गधरा वामहस्तेन तर्जनाः ।।
ब्राह्मी पूर्वदले पातु नारायणी तथाग्निके ।
माहेश्वरी दक्षदले चामुण्डा राक्षसेऽवतु ।।
कौमारी पश्चिमे पातु वायव्ये चापराजिता ।
वाराही चोत्तरे पातु नारसिंही शिवेऽवतु ।।
ऐं ह्रीं असिताङ्गः पूर्वे भैरवः परिरक्षतु ।
ऐं ह्रीं रुरुश्चाग्निकोणे ऐं ह्रीं चण्डस्तु दक्षिणे ।।
ऐं ह्रीं क्रोधो नैर्ऋत्येऽव्यातु ऐं ह्रीं उन्मत्तकस्तथा ।
पश्चिमे ऐं ह्रीं मां कपाली वायुकोणके ।।
ऐं ह्रीं भीषणाख्यश्च उत्तरेऽवतु भैरवः ।
ऐं ह्रीं संहार ऐशान्यां मातृणामङ्कणा शिवाः ।।
ऐं हेतुको वटुकः पूर्वदले पातु सदैव माम् ।
ऐं त्रिपुरान्तको वटुक आग्नेय्यां सर्वदाऽवतु ।।
ऐं वह्निवेतालो वटुको दक्षिणे मां सदाऽवतु ।
ऐं अग्निजिह्ववटुकोऽव्यातु नैर्ऋत्यां पश्चिमे तथा ।।
ऐं कालवटुकः पातु ऐं करालवटुकस्तथा ।
वायव्यां ऐं एकः पातु उत्तरे वटुकोऽवतु ।।
ऐं भीमवटुकः पातु ऐशान्यां दिशि मां सदा ।
ऐं ह्रीं हुं फट् स्वाहान्ताचतुःषष्टिमातरः ।।

ऊर्द्ध्वाधो दक्षवामाग्रे पृष्ठदेशे तु पातु माम् ।
ऐं हुं सिंहव्याघ्रमुखी पूर्वे मां परिरक्षतु ॥
ऐं कां कीं सर्पमुखी अग्निकोणे सदाऽवतु ।
ऐं मां मां मृगमेषमुखी दक्षिणे मां सदाऽवतु ॥
ऐं चौं चौं गजराजमुखी नैऋर्त्यां मां सदाऽवतु ।
ऐं में में विडालमुखी पश्चिमे पातु मां सदा ॥
ऐं खौं खौं क्रोष्ट्रमुखी वायुकोणे सदाऽवतु ।
ऐं हां हां ह्रस्वदीर्घमुखी लम्बोदरमहोदरी ॥
पातु मामुत्तरे कोणे ऐं ह्रीं ह्रीं शिवकोणके ।
ह्रस्वजङ्घतालजङ्घप्रलम्बौष्ठी सदाऽवतु ॥
एताः श्मशानवासिन्यो भीषणा विकृताननाः ।
पातु मां सर्वदा देव्यः साधकाभीष्ट पूरिकाः ॥
इन्द्रो मां पूर्वतो रक्षेदाग्नेय्यामग्निदेवता ।
दक्षे यमः सदा पातु नैऋर्त्यां नैऋर्तिश्च माम् ॥
वरुणोऽवतु मां पश्चात् वायुर्मां वायवेऽवतु ।
कुवेरश्चोत्तरे पायात् ऐशान्यान्तु सदाशिवः ॥
ऊर्ध्वं ब्रह्मा सदा पातु अधश्चानन्त देवता ।
पूर्वादिदिक्स्थिताः पान्तु वज्राद्याश्चायुधाश्च माम् ॥
कालिकाऽवतु शिरसि हृदये कालिकाऽवतु ।
आधारे कालिका पातु पादयोः कालिकाऽवतु ॥
दिक्षु मां कालिका पातु विदिक्षु कालिकाऽवतु ।
ऊर्द्ध्वं मे कालिका पातु अधश्च कालिकाऽवतु ॥
चर्मासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि मेऽवतु ।
इन्द्रियाणि मनश्चैव देहं सिद्धिश्च मेऽवतु ॥

आकेशात् पादपर्य्यन्तं कालिका मे सदाऽवतु ।
वियति कालिका पातु पथि मां कालिकाऽवतु ॥
शयने कालिका पातु सर्वकार्य्येषु कालिका ।
पुत्रान् मे कालिका पातु धनं मे पातु कालिका ॥
यत्र मे संशयाविष्टास्ता नश्यन्तु शिवाज्ञया ।
इतीदं कवचं देवि ! ब्रह्मलोकेऽपि दुर्लभम् ॥
तव प्रीत्या मया ख्यातं गोपनीयं स्वयोनिवत् ।
तव नाम्नि स्मृते देवि ! सर्वयज्ञफलं लभेत् ॥
सर्वपापः क्षयं याति वाञ्छा सर्वत्र सिध्यति ।
नाम्नाः शतगुणं स्तोत्रं ध्यानं तस्मात् शताधिकम् ॥
तस्मात् शताधिको मन्त्रः कवचं तच्छताधिकम् ।
शुचिः समाहितो भूत्वा भक्तिश्रद्धासमन्वितः ॥
संस्थाप्या वामभागे तु शक्तिं स्वामिपरायणाम् ।
रक्तवस्त्रपरीधानां शिवमन्त्रधरां शुभाम् ॥
या शक्तिः सा महादेवी हररूपश्च साधकः ।
अन्योऽन्यचिन्तनाद्देवि ! देवत्वमुपजायते ॥
शक्तियुक्तो यजेद्देवीं चक्रे वा मनसापि वा ।
भोगैश्च मधुपर्कांद्यैस्ताम्बूलैश्च सुवासितैः ॥
ततस्तु कवचं दिव्यं पठेदेकमनाः प्रिये ।
तस्य सर्वार्थ सिद्धिः स्यान्नात्र कार्य्या विचारणा ॥
इदं रहस्यं परमं परं स्वस्त्ययनं महत् ।
यः सकृत्तु पठेद्देवि ! शृणुयाद्वा समाहितः ॥
स सर्वान् लभते कामान् परे देवी पुरं व्रजेत् ।
सकृद्यस्तु पठेद्देवि ! कवचं देवदुर्लभम् ॥

सर्वयज्ञफलं तस्य भवेदेव न संशयः।
संग्रामे च जयेत् शत्रून् मातङ्गानिव केशरी ॥
नास्त्राणि तस्य शस्त्राणि शरीरे प्रभवन्ति च।
तस्य व्याधिः कदाचित् न दुःखं नास्ति कदाचन ॥
गतिस्तस्यैव सर्वत्र वायुतुल्यः सदा भवेत्।
दीर्घायुः कामभोगीशो गुरुभक्तः सदा भवेत् ॥
अहो कवचमाहात्म्यं पठ्यमानस्य नित्यशः।
विनापि नययोगेन योगीशसमतां व्रजेत् ॥
भूर्जत्वचि समालिख्य चक्रं तन्त्रविनिर्मितम्।
मध्यत्रिकोणे संलिख्य साध्यसाधकयोर्लिपिम् ॥
उद्धरेन्मूलमन्त्रश्च मातृकार्णेन वेष्टयेत्।
लघुमिश्रेण चन्द्रेण चन्दनाभ्यां सुरेश्वरि ॥
एतन्मन्त्रं महेशानि सुरासुरसुदुर्लभम्।
गोरोचनाकुङ्कुमाभ्यां तद्वाह्ये कवचं लिखेत् ॥
श्वेतसूत्रेण संवेष्ट्य लाक्षया परिमण्डयेत्।
पञ्चामृतैः पञ्चगव्यैः स्नापयित्वा शुभेऽहनि ॥
सम्पूज्य देवतारूपं गुटिकां सर्वकामदाम्।
प्राणप्रतिष्ठामन्त्रेण प्राणं तत्र नियोजयेत् ॥
अन्तर्योनिं ततो ध्यात्वा तत्र संस्थापयेत् बुधः।
एषा तु गुटिका देवि कण्ठलग्नाऽखिलप्रदा ॥
शीर्षे वश्यकरी देवि नाभौ स्तम्भनकारिणी।
वद्ध्वा वाम भुजे ह्येषा वैरिपक्षक्षयङ्करी ॥
जठरे रोगदमनी पुत्रदा हृदि संस्थिता।
विद्याकरी ललाटस्था शिखायान्तु यशःप्रदा ॥

सर्वकामप्रदा देवि सर्वरोगक्षयङ्करी ।
दक्षिणे बाहुमूले वै यदि तिष्ठति सर्वदा ॥
सदा सर्वार्थ सिद्धिः स्याद् यद्यन्ममनसि वर्त्तते ।
त्र्यहात्तु कवचस्यास्य पठनाद्धारणात् प्रिये ॥
सर्वान् कामानवाप्नोति तव स्नेहात् प्रकाशितम् ।
गुरोः पादप्रसादेन सद्विद्या यदि लभ्यते ॥
तथैव कवचं देवि नाजप्त्वा गुरुपादुकाम् ।
तत्फलं नाशमाप्नोति परे नरकमाप्नुयात् ॥
सत्यं सत्यं पुनः सत्यं सत्यं सत्यं पुनः पुनः ।
न शक्नोमि प्रभावन्तु कवचस्यास्य वर्णितुम् ॥
यस्मै कस्मै न दातव्यं कवचञ्च सुदुर्लभम् ।
न देयं परशिष्येभ्यः कृपणेभ्यः सुरेश्वरि ॥
शिष्याय भक्तियुक्ताय सेवकाय तथैव च ।
गुरुभक्तिविहीनाय परदाररताय च ॥
निन्दकाय कुलीनाय दाम्भिकाय च सुन्दरि ।
यो ददाति निषिद्धेभ्यः कवचं मम मुखात् श्रुतम् ॥
तस्य नश्यन्ति देवेशि आयुः कीर्त्तियशः श्रयः ।
न हिंसन्ति सदा देवि योगिन्यो मातृमण्डलात् ॥
परे नरकमाप्नोति जन्मकोटिशतानि च ।
देयं शिष्याय शान्ताय गुरुभक्तिपराय च ॥
सर्वलक्षणयुक्ताय तत्तन्मन्त्रयुताय च ॥
इत्युत्तरतन्त्रे कालीप्रस्तावे कालीभैरवसंवादे ।
श्रीमद्दक्षिणकालिकाकवकं सम्पूर्णम् ॥

## अथ स्तोत्रम्—

**महाकालभैरव उवाच—**

स्तवराजं शृणु राम सर्वकालमनोहरम् ।
यस्य स्मरणमात्रेण कालिका संप्रसीदति ।।
यद्भक्तस्त्वं यदेवासि भृगुवंशसमुद्भव ।
गोपनीयं प्रयत्नेन पठनीयं परात् परम् ।।
कालिस्तोत्रं मम प्रेयः कस्मैचिन्न प्रकाशितम् ।
कथ्यते त्वदनुरोधात् सर्वपापप्रणाशननम् ।।
शृणु राम ! शृणु राम ! शृणु राम ! सदैव हि ।
गोपनीयं गोपनीयं गोपनीयं न संशयः ।।
गणरात्रे मुक्तकेशो नग्नः शक्तिसुसगङ्गतः ।
रक्तचन्दनसिंदूरैस्तथा पञ्चोपचारकैः ।।
मत्स्यमांससुराद्यैश्च ताम्बूलैश्च विशेषतः ।
पूजयित्वा महाकालीं महाकालरतातुराम् ।।
तीर्थपानं विधायादौ ताम्बूलं भक्षयेत्ततः ।
भगलिंगामृतं मध्ये निवेदयेत् सुसाधकः ।।
जपित्वा च महामंत्रं कालीरूपं मनोहरम् ।
मनसा चिन्तयेत्कालीं पठन् स्तोत्रं तु साधकः ।।
रक्षो यक्षपिशाचेभ्यो नित्यं रक्षाकरं परम् ।
प्रसन्ना कालिका तस्य पुत्रत्वेनानुकम्पते ।।
दक्षिणे कालिके मातर्मुण्डमालाविभूषिते ।
भक्तत्राणव्यग्रचित्ते यमजाड्यं विनाशय ।।
ज्वलच्चिताग्निमध्यस्थे परिवारसमन्विते ।
त्वत्पदाम्भोजमापन्नं रक्ष मां पुत्रवत् सदा ।।

महामेघच्छविन्यासे मुक्तकेशि चतुर्भुजे ।
पाण्डित्यं कविताञ्चैव मह्यं देहि महेश्वरि ।।
वामोद्ध्वे च महाखङ्गं विधारयसि शङ्करि ।
अधो लसच्छिन्नमुण्डे मम विघ्नं विनाशय ।।
अभयं दक्षिणे चोद्ध्वे तथाधः पाणिना वरम् ।
कण्ठसंसक्तमुण्डालि महाकालि नमोऽस्तु ते ।।
सततं त्वत्स्वरूपं ये स्मरन्ति साधकोत्तमाः ।
तेषां समस्तशास्त्रेषु गतिरव्याहता सदा ।।
चिन्तयामि च त्वन्नाम रक्ष मां सर्वतः सदा ।
दिगम्बरीं करालास्यां घोरदष्ट्रां भयानकाम् ।।
कर्णमूले शवयुग्मां स्थूलतुङ्गपयोधराम् ।
महारौद्रीं महाघोरां श्मशानालयवासिनीम् ।।
शवपाणिसमूहैश्च कृतकाञ्चीं हसन्मुखीम् ।
ओष्ठप्रान्तगलद्रक्तधाराविस्फुरिताननाम् ।।
मुण्डालिरसंस्रवद्रक्तैः सर्वाङ्गे चारुर्चचिताम् ।
शिवाभिर्घोररावाभिश्चतुर्दिक्षु समन्विताम् ।।
पूजाकाले पठेद् यस्तु सद्भावपुलको बुधः ।
स भवेत् कालिकापुत्र इति ख्यातिमुपागतः ।।
रजस्वलाभगं पश्यन् जप्त्वा कालीमहामनुम् ।
स्तवेनानेन संस्तुत्य साधकः किं न साधयेत् ।।
अष्टोत्तर शतंजप्त्वा योनिमामन्त्र्य मंत्रवित् ।
संगम्य पठनादस्य सर्वविद्येश्वरो भवेत् ।
मातेव दक्षिणा तस्य सर्वत्र हितकारिणी ।
तस्य देहे सदा काली वसेद्राम न संशयः ।।

पूजाजपविहीनाय स्त्रीसुरानिंदकाय च ।
षण्मार्गस्य रोधकाय गुर्वभक्ताय सर्वदा ।।
श्रृणु वत्स प्रयत्नेन स्तवमेनं न दर्शयेत् ।
प्रमादाद्दर्शनाद्वापि तस्य सिद्धिर्भवेन्न हि ।।

इति कालिकापरमरहस्ये कालीहृदये महाकालभैरवपरशुरामसंवादे श्रीदक्षिणकालिकास्तवः ।।

## अथ हृदयम् (शाक्तप्रमोदे कालीतन्त्रे)—

**श्रीमहाकाल उवाच :**

महाकौतूहलस्तोत्रं हृदयाख्यम्महोत्तमम् ।
श्रृणु प्रिये महागोप्यन्दक्षिणायाः सुगोपितम् ।।१।।
अवाच्यमपि वक्ष्यामि तव प्रीत्या प्रकाशितम् ।
अन्येभ्यः कुरु गोप्यश्च सत्यं सत्यश्च शैलजे ।।२।।

**श्रीदेव्युवाच :**

कस्मिन्युगे समुत्पन्नङ्केन स्तोत्रङ्कृतम्पुरा ।
तत्सर्वङ्कथ्यतां शम्भो महेश्वर दयानिधे ।।३।।

**श्रीमहाकाल उवाच :**

पुरा प्रजापतेः शीर्षश्छेदनङ्कृतवानहम् ।
ब्रह्महत्याकृतैः पापैर्भैरवत्वम्ममागतम् ।।४।।
ब्रह्महत्याविनाशाय कृतं स्तोत्रम्मया प्रिये ।
कृत्याविनाशकं स्तोत्रम्ब्रह्महत्यापहारकम् ।।५।।

ॐ अस्य श्रीदक्षिणकाल्या हृदयस्तोत्रमन्त्रस्य श्रीमहाकालऋषिरुष्णिक्छन्दः श्रीदक्षिणकालिकादेवता क्रीं बीजं, ह्रीं शक्तिः, नमः कीलकम् । सर्वत्र सर्वदा जपे विनियोगः । ॐ क्रां हृदयायनमः । ॐ क्रीं शिरसेस्वाहा ।

ॐ क्रूं शिखायै वषट् । ॐ क्रैं कवचाय हुम् । ॐ क्रौं नेत्रत्रयाय वौषट् । ॐ क्रीं अस्त्रायफट् ।

**अथ ध्यानम्—**

ध्यायेत्कालीम्महामायान्त्रिनेत्राम्बहुरुपिणीम् ।
चतुर्भुजां ल्लजज्जिह्वाम्पूर्णचन्द्रनिभाननाम् । १ ।
नीलोत्पलदलप्रख्यां शत्रुसङ्घविदारिणीम् ।
नरमुण्डन्तथा खड्गङ्कमलं व्वरदन्तथा । २ ।
विभ्राणां रक्तवदनान्दंष्ट्रालीङ्घोररूपिणीम् ।
अट्टाट्टहासनिरतां सर्व्वदा च दिगम्बराम् । ३ ।
शवासनस्थितान्देवीम्मुण्डमालाविभूषिताम् ।
इति ध्यात्वा महादेवीन्ततस्तु हृदयम्पठेत् । ४ ।
ॐ कालिका घोररूपाद्या सर्व्वकामफलप्रदा ।
सर्वदेवस्तुता देवी शत्रुनाशङ्करोतु मे । ५ ।
ह्लीं ह्लीं स्वरूपिणी श्रेष्ठा त्रिषु लोकेषु दुर्लभा ।
तव स्नेहान्मयाख्यातन्न देयं यस्य कस्यचित् । ६ ।
अथ ध्यानम्प्रवक्ष्यामि निशामय परात्मिके ।
यस्य विज्ञानमात्रेण जीवन्मुक्तो भविष्यति । ७ ।
नागयज्ञोपवीताञ्च चन्द्रार्द्धकृतेशेखराम् ।
जटाजूटाञ्च सञ्चिन्त्य महाकालसमीपगाम् । ८ ।
एवन्यासादयस्सर्व्वे ये प्रकुर्वन्ति मानवाः ।
प्राप्नुवन्ति च ते मोक्ष सत्यं सत्यं व्वरानने । ९ ।
यन्त्रं श्रृणु परन्देव्यास्सर्व्वार्थसिद्धिदायम् ।
गोप्याद्गोप्यतरं गोप्यङ्गोप्याद्गोप्यतरम्महत् । १० ।
त्रिकोणम्पञ्चकञ्चाष्टकमलम्भूपुरान्वितम् ।
मुण्डपङ्क्तिञ्च ज्वालाञ्च कालियन्त्रं सुसिद्धिदम् । ११ ।

मन्त्रन्तु पूर्व्वकथितन्धारयस्व सदा प्रिये।
देव्या दक्षिणकाल्यास्तु नाममालान्निशामय। १२।
काली दक्षिणकाली च कृष्णरूपा परात्मिका।
मुण्डमाली विशालाक्षी सृष्टिसंहारकारिका। १३।
स्थितिरूपा महामाया योगनिद्रा भगात्मिका।
भगसर्पिःपानरता भगोद्योता भगाङ्गजा। १४।
आद्या सदा नवा धोरा महातेजाः करालिका।
प्रेतवाहा सिद्धिलक्ष्मीरनिरुद्धा सरस्वती। १५।
एतानि नाममाल्यानि ये पठन्ति दिने दिने।
तेषान्दासस्य दासोऽहं सत्यं सत्यम्महेश्वरि। १६।
कालीङ्कालहरान्देवीङ्कङ्कालवीजरूपिणीम्।
काकरूपाङ्कलातीताङ्कालिकान्दक्षिणाम्भजे। १७।
कुण्डगोलप्रियान्देवीं स्वयम्भूकुसुमेरताम्।
रतिप्रियाम्महारौद्रीङ्कालिकाम्प्रणमाम्यहम्। १८।
दूतीप्रियाम्महादूतीन्दूतीयोगेश्वरीम्पराम्।
दूतीयोगोद्भवरतान्दूतीरूपान्नमाम्यहम्। १९।
क्रीं मन्त्रेण जलञ्जप्त्वा सप्तधा सेचनेन तु।
सर्व्वे रोगा विनश्यन्ति नात्र कार्य्या विचारणा। २०।
क्रीं स्वाहान्तैर्म्महामन्त्रैश्चन्दनं साधयेत्ततः।
तिलकङ्क्रियते प्राज्ञैर्ल्लोको वश्यो भवेत्सदा। २१।
क्रीं हूं ह्रीं मन्त्रजप्तेन चाक्षतं सप्तभिः प्रिये।
महाभयविनाशश्च जायते नात्र संशयः। २२।
क्रीं ह्रीं हूं स्वाहामन्त्रेण श्मशानाग्निञ्च मन्त्रयेत्।
शत्रोर्ग्गृहे प्रतिक्षिप्त्वा शत्रोर्म्मृत्युर्ब्भविष्यति। २३।

हूं ह्लीं क्रीं चैव उच्चाटे पुष्पं संशोध्य सप्तधा ।
रिपूणाञ्चैव चोच्चाटन्नयत्येव न संशयः । २४ ।
आकर्षणे च क्रीं क्रीं क्रीं जप्त्वाक्षतम्प्रतिक्षिपेत् ।
सहस्रयोजनस्था च शीघ्रमागच्छति प्रिये । २५ ।
क्रीं क्रीं क्रीं हूं हूं ह्लीं ह्लीं च कज्जलं शोधितन्तथा ।
तिलकेन जगन्मोहं सप्तधा मन्त्रमाचरेत् । २६ ।
हृदयम्परमेशानि सर्व्वपापहरम्परम् ।
अश्वमेधादिदानानाङ्कोटिकोटिगुणोत्तरम् । २७ ।
कन्यादानादिदानानाङ्कोटिकोटिगुणम्फलम् ।
दूतीयागादियागानाङ्कोटिकोटिफलं स्मृतम् । २८ ।
गङ्गादिसर्व्वतीर्थानाम्फलङ्कोटिगुणं स्मृतम् ।
एकधा पाठमात्रेण सत्यं सत्यम्मयोदितम् । २९ ।
कौमारी स्वेष्टरूपेण पूजाङ्कृत्वा विधानतः ।
पठेत्स्तोत्रम्महेशानि जीवन्मुक्तस्स उच्यते । ३० ।
रजस्वलाभगन्दृष्ट्वा पठेदेकाग्रमानसः ।
लभते परमं स्थानन्देवीलोके वरानने । ३१ ।
महादुःखेमहारोगे महासङ्कटके दिने ।
महाभये महाघोरे पठेत्स्तोत्रं महोत्तमम् ।
सत्यं सत्यम्पुनस्सत्यङ्गोपयेन्मातृजारवत् । ३२ ।

॥ इति हृदयम् ॥

**अथोपनिषद्—**

अथ हैनाम्ब्रह्मरन्ध्रे ब्रह्मस्वरूपिणीमाप्नोति सुभगाङ्कामरेफेन्दिरां समष्टिरूपिणीमादौ तदन्वकर्तुर्बीजद्वयकूर्च्चबीजन्तद्धोमषष्ठस्वरविन्दुमूलनं रूपंन्तदनुभुवना द्वयभुवना तु व्योमज्वलनेन्दिराशून्यमेलनरूपा दक्षिणे

कालिके वत्यभिमुखङ्गता तदनु बीजसप्तकमुच्चार्य बृहद्भानुजायामुच्चरेते। अथ सर्व्वमन्त्रोत्तमोत्तम इमं सकृञ्जपन् स तु विश्वेश्वरः स तु नारीश्वरः स तु वेदेश्वरः स सर्व्वगुरुः सर्व्वमस्यः सर्व्वेषु वेदेष्वधिश्रितो भवति। स सर्व्वेषु तीर्थेषु स्नातो भवति। सर्व्वेषु यज्ञेषु दीक्षितो भवति। स स्वयं सदाशिवः त्रिकोणन्त्रिकोणन्त्रिकोणम्पुनश्चैवन्त्रिकोणन्त्रिकोणन्ततो वसुदलं सार्द्धचन्द्र-केसरं युग्मशो विलिख्य सम्भृतम्भूपुरैकेन युतं सर्व्वज्ञेनाभ्यर्च्य तस्मिन् देवीदले रेखायां व्विन्यस्य ध्येया। अभिनवजलदवदना घनस्तनी कुटिलदंष्ट्रा शवासना वराभयखङ्गमुण्डमण्डितहस्ता कालिका ध्येया। काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी विप्रचित्तेति षट्कोणगाः। उग्रा उग्रप्रभा दीप्ता-नीला-घना-बलाका-मात्रा-मुद्रा-मितेति नवकोणगाः इत्थम्पञ्च-दशकोणगाः। ब्राह्मी-नारायणी-माहेश्वरी-चामुण्डा-कौमार्यपराजिता-वाराही-नारसिंहीत्यष्टपत्रगाः। चतुष्कोणगाश्चत्वारो देवाः माधव-रुद्र-विनायक-सौराः। चतुर्दिक्षु इन्द्र-यम-वरुण-कुबेराः। देवीं सर्व्वाङ्गे नादौ सम्पूज्य भगोदकेन तर्प्पणम्पञ्चमकारेण पूजनमेतस्याः सपर्य्यायाः किमधिकन्नो शक्यम्ब्रह्मादिपदं हेयं हेलया प्राप्नोति एतस्या एकद्वित्रिक्रमेण मनवो भवन्ति। नारिमित्रादिलक्षणमत्र वर्त्तते अमुष्यमन्त्रपाठकस्य गतिरस्ति नान्यस्येह गतिरस्ति एतस्यास्तारा मनोर्द्दुर्गामनोर्व्वा सिद्धिः इदानीन्तु सर्व्वाः स्वप्नभूता असितैव जागर्ति इमामसिताज्ञामुपनिषदं योऽधीते सोऽपुत्रः पुत्रीभवति निर्द्धनो धनायति धर्मार्थकाममोक्षाणाम्पात्रीयत्यन्यस्य वरदः दृष्ट्वा जगन्मोहयति क्रोधस्तञ्जहाति गङ्गादितीर्थक्षेत्राणामग्निष्टोमा-दियज्ञानां फलभागीयति।

इत्याथर्व्वणवेदे सौभाग्यकाण्डे कालिकोपनिषत्समाप्ता।

## अथ सहस्रनामस्तोत्रम् यथा—

**श्री शिव उवाच**

कथितोऽयं महामन्त्रः सर्वमन्त्रोत्तमोत्तमः।
यामासाद्य मया प्राप्तमैश्वर्य्यपदमुत्तमम्॥

संयुक्तः परया भक्त्या यथोक्तविधिना भवान् ।
कुरुतामर्चनं देव्यास्त्रैलोक्यविजिगीषया ॥

**श्री राम उवाच**

प्रसन्नो यदि मे देव परमेश पुरातन ।
रहस्यं परमं देव्याः कृपया कथय प्रभो ॥
विनार्चनं विना होमं विना न्यासं विना बलिम् ।
विना गन्धं विना पुष्पं विना नित्योदितां क्रियाम् ॥
प्राणायामं विना ध्यानं विना भूतविशोधनन् ।
विना दानं विना जापं येन काली प्रसीदति ॥

**शिव उवाच**

पृष्टं त्वयोत्तमं प्राज्ञ भृगुवंशसमुद्भव ।
भक्तानामपि भक्तोऽसि त्वमेव साधयिष्यसि ॥
देवीं दानवकोटिघ्नीं लीलया रुधिरप्रियाम् ।
सदा स्तोत्रप्रियामुग्रां कामकौतुकलालसाम् ॥
सर्वदानन्दहृदयामासवोत्सवमानसम् ।
माध्वीकमत्स्यमांसानुरागिणीं वैष्णवीं पराम् ॥
श्मशानवासिनीं प्रेतगणनृत्यमहोत्सवाम् ।
योगप्रभावां योगेशीं योगीन्द्रहृदयस्थिताम् ॥
तामुग्रकालिकां राम प्रसादयितुमर्हसि ।
तस्याः स्तोत्रं परं पुण्यं स्वयं काल्या प्रकाशितम् ॥
तव तत् कथयिष्यामि श्रुत्वा वत्सावधारय ।
गोपनीयं प्रयत्नेन पठनीयं परात्परम् ॥
यस्यैककालपठनात् सर्वे विघ्नाः समाकुलाः ।
नश्यन्ति दहने दीप्ते पतङ्गा इव सर्वतः ॥

गद्यपद्यमयीवाणी तस्य गङ्गाप्रवाहवत् ।
तस्य दर्शन मात्रेण वादिनो निष्प्रभां गताः ।।
तस्य हस्ते सदैवास्ति सर्वसिद्धिर्न संशयः ।
राजानोऽपि च दासत्वं भजन्ते किं परे जनाः ।।
निशीथे मुक्तकेशस्तु नग्नः शक्तिसमाहितः ।
मनसा चिन्तयेत् कालीं महाकालेन लालिताम् ।।
पठेत् सहस्रनामाख्यं स्तोत्रं मोक्षस्य साधनम् ।
प्रसन्ना कालिका तस्य पुत्रत्वेनानुकम्पते ।।
यथा ब्रह्मामृतैर्ब्रह्मकुसुमैः पूजिता परा ।
प्रसीदति तथानेन स्तुता काली प्रसीदति ।।

अस्य श्रीदक्षिणकालिकासहस्रनामस्तोत्रस्य महाकालभैरव ऋषिस्त्रिष्टुछन्दः श्मशानकाली देवता धर्मार्थकाममोक्षार्थे विनियोगः ।

ॐ श्मशानकालिका काली भद्रकाली कपालिनी ।
गुह्यकाली महाकाली कुरुकुल्ला विरोधिनी ।।
कालिका कालरात्रिश्च महाकालनितम्बिनी ।
कालभैरवभार्य्या च कुलवर्त्मप्रकाशिनी ।।
कामदा कामिनी कन्या कमनीयस्वरूपिणी ।
कस्तूरीरसलिप्ताङ्गी कुञ्जरेश्वरगामिनी ।।
ककारवर्णसर्वाङ्गी कामिनी कामसुन्दरी ।
कामार्त्ता कामरूपा च कामधेनुः कलावती ।।
कान्ता कामस्वरूपा च कामाख्या कुलकामिनी ।
कुलीना कुलवत्यम्बा दुर्गा दुर्गतिनाशिनी ।।
कौमारी कुलजा कृष्णा कृष्णदेहा कृशोदरी ।
कृशाङ्गी कुलिशाङ्गी च क्रीङ्कारी कमला कला ।।

करालास्या कराली च कुलकांतापराजिता ।
उग्रा उग्रप्रभा दीप्ता विप्रचित्ता महाबला ।।
नीला घना मेघनादा मात्रा मुद्रा मितामिता ।
ब्राह्मी नारायणी भद्रा सुभद्रा भक्तवत्सला ।।
माहेश्वरी च चामुण्डा वाराही नारसिंहिका ।
वज्राङ्गी वज्रकङ्काला नृमुण्डस्रग्विणी शिवा ।।
मालिनी नरमुण्डालीगलद्रक्तविभूषणा ।
रक्तचन्दनसिक्ताङ्गी सिन्दूरारुणमस्तका ।।
घोररूपा घोरदंष्ट्रा घोरा घोरतरा शुभा ।
महादंष्ट्रा महामाया सुदती युगदन्तुरा ।।
सुलोचना विरूपाक्षी विशालाक्षी त्रिलोचना ।
शारदेन्दुप्रसन्नास्या स्फुरत्स्मेराम्बुजेक्षणा ।।
अट्टहासा प्रफुल्लास्यास्मेरवक्त्रा सुभाषिणी ।
प्रफुल्लपद्मवदना स्मितास्या प्रियभाषिणी ।।
कोटराक्षी कुलश्रेष्ठा महती बहुभाषिणी ।
सुमतिः कुमतिश्चण्डा चण्डमुण्डातिवेगिनी ।।
प्रचण्डा चण्डिका चण्डी चर्चिता चण्डवेगिनी ।
सुकेशी मुक्तकेशी च दीर्घकेशी महाकचा ।।
प्रेतदेहकर्णपूरा प्रेतपाणिसुमेखला ।
प्रेतासना प्रियप्रेताप्रेतभूमिकृतालया ।।
श्मशानवासिनी पुण्या पुण्यदा कुलपण्डिता ।
पुण्यालया पुण्यदेहा पुण्यश्लोका च पावनी ।।
पूता पवित्रा परमा परा पुण्यविभूषणा ।
पुण्यनाम्नी भीति हरा वरदा खड्गमालिनी ।।

नृमुण्डहस्ता शान्ता च छिन्नमस्ता सुनासिका ।
दक्षिणा श्यामला श्यामा शान्ता पीनोन्नतस्तनी ।।
दिगम्बरी घोररावा सृक्वान्तरक्तवाहिनी ।
घोररावा शिवासङ्गा निःसङ्गामदनातुरा ।।
मत्ता प्रमत्ता मदना सुधासिंधुनिवासिनी ।
अतिमत्ता महामत्ता सर्वाकर्षणकारिणी ।।
गीतप्रिया वाद्यरता प्रेतनृत्यपरायणा ।
चतुर्भुजा दशभुजा अष्टादशभुजा तथा ।।
कात्यायनी जगन्माता जगतीपरमेश्वरी ।
जगद्वन्धुर्जगद्धात्री गजदानंदकारिणी ।।
जगज्जीववती हैमवती माया महालया ।
नागयज्ञोपवीताङ्गी नागिनी नागशायिनी ।।
नागकन्या देवकन्या गान्धारी किन्नरी सुरी ।
मोहरात्री महारात्री दारुणाभा सुरासुरी ।।
विद्याधरी वसुमती यक्षिणी योगिनी जरा ।
राक्षसी डाकिनी वेदविभूषणा ।।
श्रृति स्मृति महाविद्या गुह्यविद्या पुरातनी ।
तत्त्वार्चिता स्वधा स्वाहा निद्रा तंद्रा च पार्वती ।।
अपर्णा निश्चला लोला सर्वविद्या तपस्विनी ।
गङ्गा काशी शची सीता सती सत्यपरायणा ।।
नीतिः सुनीतिः सुरुचिस्तुष्टिः पुष्टिर्धृतिः क्षमा ।
वाणी बुद्धिर्महालक्ष्मीर्लक्ष्मीर्नीलसरस्वती ।।
स्रोतस्वती स्रोतवती मातङ्गी विजया जया ।
नदी सिन्धुः सर्वमयी तारा शून्यनिवासिनी ।।

शुद्धा तरङ्गिणी मेधा लाकिनी बहुरूपिणी ।
सदानन्दमयी सत्या सर्वानन्दस्वरूपिणी ।।
सुनन्दा नन्दिनी स्तुत्या स्तवनीया स्वभाविनी ।
रङ्किणी टङ्किनी चित्रा विचित्रा चित्ररूपिणी ।।
पद्मा पद्मालया भ्रान्तिर्भवानी रुधिरप्रिया ।
रुद्राणी मृड़ानी शत्रुमर्दिनी ।।
उपेन्द्राणी महेशानी ज्योत्स्ना चेन्द्रस्वरूपिणी ।
सूर्य्यात्मिका रुद्रपत्नी रौद्री स्त्रीप्रकृतिः पुमान् ।।
शक्तिः सूक्तिर्मतिमती भुक्तिर्मुक्तिः पतिव्रता ।
सर्वेश्वरी सर्वमाता सर्वाणी हरवल्लभा ।।
सर्वज्ञा सिद्धिदा सिद्धा भाव्या भव्या भयापहा ।
कर्त्री हर्त्री पालयित्री शर्वरी तामसी दया ।।
तमिस्रायामिनीस्था च स्थिरा धीरा तपस्विनी ।
चार्वङ्गी चञ्चला लोलजिह्वा चारुचरित्रिणी ।।
त्रपा त्रपावती लज्जा निर्लज्जा ह्लीं रजोवती ।
सत्त्ववती धर्मनिष्ठा श्रेष्ठा निष्ठुरवादिनी ।।
गरिष्ठा दुष्टसंहर्त्री विशिष्टा श्रेयसी घृणा ।
भीमा भयानका भीमनादिनी भीः प्रभावती ।।
वागीश्वरी श्रीर्यमुना यज्ञकर्त्री यजुःप्रिया ।
ऋक्सामाथर्वनिलया रागिणी शोभनस्वरा ।।
कलकण्ठी कम्बुकण्ठी वेणुवीणापारायणा ।
वंशिनी वैष्णवी स्वच्छा धात्री त्रिजगदीश्वरी ।।
मधुमती कुण्डलिनी ऋद्धिः सिद्धिः शुचिस्मिता ।
रम्भोर्वशी रतीरामा रोहिणी रेवती रमा ।।

शङ्खिनी चक्रिणी कृष्णा गदिनी पद्मिनी तथा।
शूलिनी परिघास्त्रा च पाशिनी शार्ङ्गपाणिनी ॥
पिनाकधारिणी धूम्रा शरभी वनमालिनी।
वज्रिणी समरप्रीता वेगिनी रणपण्डिता ॥
जटिनी बिम्बिनी नीला लावण्याम्बुधिचन्द्रिका।
बलिप्रिया सदापूज्या पूर्णा दैत्येन्द्रमाथिनी ॥
महिषासुरसहस्त्री वासिनी रक्तकान्तिका।
रक्तपा रुधिराक्ताङ्गी रक्तखर्परहस्तिनी ॥
रक्तप्रिया मांसरुचिरा शवासक्तमानसा।
गलच्छोणितमुण्डालिकण्ठमालाविभूषणा ॥
शवासना चितान्तस्था माहेशी वृषवाहिनी।
व्याघ्रत्वगम्बरा चीनचेलिनी सिंहवाहिनी ॥
वामदेवी महादेवी गौरी सर्वज्ञभाविनी।
वालिका तरुणी बृद्धा वृद्धमाता जरातुरा ॥
सुभ्रु विलासिनी ब्रह्मवादिनी ब्राह्मणी मही।
स्वप्नावली चित्रलेखा लोपामुद्रा सुरेश्वरी ॥
अमोघाऽरुन्धती तीक्ष्णा भौमवत्यनुवादिनी।
मन्दाकिनी मन्दहासा ज्वालामुख्यसुरान्तका ॥
मानदा मानिनी मान्या माननीया मदोद्धता।
मदिरा मदिरोन्मादा मेध्या नव्या प्रसादिनी ॥
सुमध्यानन्तगुणिनी सर्वलोकोत्तमोत्तमा।
जयदा जित्वरा जेत्री जयश्रीर्जयशालिनी ॥
सुखदा शुभदा सत्या सभासंक्षोभकारिणी।
शिवदूती भूतिमती विभूतिर्भीषणानना ॥

कौमारी कुलजा कुन्ती कुलस्त्री कुलपालिका।
कीर्त्तिर्यशस्विनी भूषा भूष्या भूतपतिप्रिया॥
सगुणा निर्गुणा धृष्टा निष्ठा काष्ठा प्रतिष्ठिता।
धनिष्ठा धनदा धन्या वसुधा स्वप्रकाशिनी॥
उर्वी गुर्वी गुरुश्रेष्ठा सगुणा त्रिगुणात्मिका।
महाकुलीना निष्कामा सदामा कामजीवना॥
कामदेवकला रामाभिरामा शिवनर्त्तकी।
चिन्तामणिकल्पलता जाग्रती दीनवत्सला॥
कार्त्तिकी कीर्त्तिका कृत्या अयोध्या विषमा समा।
सुमन्त्रा मन्त्रिणी घूर्णा ह्लादिनी क्लेशनाशिनी॥
त्रैलोक्य जननी हृष्टा निर्मांसामनोरूपिणी।
तड़ागनिम्नजठरा शुष्कमांसास्थिमालिनी॥
अवन्ती मथुरा माया त्रैलोक्यपावनीश्वरी।
व्यक्ताव्यक्ताऽनेकमूर्त्तिः शर्वरी भीमनादिनी॥
क्षेमङ्करी शङ्करीः च सर्व सम्मोहकारिणी।
ऊर्ध्वतेजस्विनी क्लिन्ना महातेजस्विनीतथा॥
अद्वैता भोगिनी पूज्या युवती सर्वमङ्गला।
सर्वप्रयङ्करी भोग्या धरणी पिशिताशना॥
भयङ्करी पापहरा निष्कलङ्का वशङ्करी।
आशा तृष्णा चन्द्रकला निदान्या वायुवेगिनी॥
सहस्रसूर्य्यसङ्काशा चन्द्रकोटिसमप्रभा।
वह्निमण्डल संस्था च सर्वतत्त्वप्रतिष्ठिता॥
सर्वाचारवती सर्वदेवकन्याधिदेवता।
दक्षकन्या दक्षयज्ञनाशिनी दुर्गतारिका॥

इज्या पूज्या विभीर्भूतिः सत्कीर्त्तिर्ब्रह्मरूपिणी ।
रम्भोरुश्चतुरा राका जयन्ती करुणा कुहुः ।।
मनस्विनी देवमाता यशस्या ब्रह्मचारिणी ।
ऋद्धिदा वृद्धिदा वृद्धिः सर्वाद्या सर्वदायिनी ।।
आधाररूपिणी ध्येया मूलाधारनिवासिनी ।
आज्ञा प्रज्ञापूर्णमनाश्चन्द्रमुख्यनुकूलिनी ।।
वावदूका निम्ननाभिः सत्या सन्ध्या दृढव्रता ।
आन्वीक्षिकी दण्डनीतिस्त्रयी त्रिदिवसुन्दरी ।।
ज्वलिनी ज्वालिनी शैलतनया विन्ध्यवासिनी ।
अमेया खेचरी धैर्य्या तुरीया विमलातुरा ।।
प्रगल्भा वारुणीच्छाया शशिनी विस्फुलिङ्गिनी ।
भुक्तिः सिद्धिः सदाप्राप्तिः प्रकाम्या महिमाणिमा ।।
इच्छासिद्धिर्विसिद्धा च वशित्वोर्ध्वनिवासिनी ।
लघिमा चैव गायत्री सावित्री भुवनेश्वरी ।।
मनोहरा चिता दिव्या देव्युदारा मनोरमा ।
पिङ्गला कपिला जिह्वारसज्ञा रसिका रसा ।।
सुषुम्नेडा भोगवती गान्धारी नरकान्तका ।
पाञ्चाली रुक्मिणी राधाराध्या भीमाधिराधिका ।।
अमृता तुलसी वृन्दा कैटभी कपटेश्वरी ।
उग्रचण्डेश्वरी वीरा जननी वीरसुन्दरी ।।
उग्रतारा यशोदाख्या देवकी देवमानिता ।
निरञ्जना चित्रदेवी क्रोधिनी कुलदीपिका ।।
कुलवागीश्वरी वाणी मातृका द्राविणी द्रवा ।
योगेश्वरी महामारी भ्रामरी विन्दुरूपिणी ।

दूती प्राणेश्वरी गुप्ता बहुला चामरींप्रभा ।
कुब्जिका ज्ञानिनीज्येष्ठा भुशुण्डी प्रकटा तिथिः ।।
द्रविणी गोपनी माया कामबीजेश्वरी क्रिया ।
शाम्भवी केकरा मेना मूषलास्त्रा तिलोत्तमा ।।
अमेयविक्रमा क्रूरा सम्पत्शाला त्रिलोचना ।
सुस्थी हव्यवहा प्रीतिरुष्मा धूम्रार्चिरङ्गदा ।।
तपिनी तापिनी विश्वा भोगदा धारिणी धरा ।
त्रिखंडा बोधिनी वश्या सकला शब्दरूपिणी ।।
बीजरूपामहामुद्रा योगिनी योनिरूपिणी ।
अनङ्गकुसुमानङ्गमेखलानङ्गरूपिणी ।।
वज्रेश्वरी च जयिनी सर्वद्वन्द्वक्षयङ्करी ।
षडङ्गयुवती योगयुक्ता ज्वालांशुमालिनी ।।
दुराशया दुराधारा दुर्जया दुर्गरूपिणी ।
दुरन्ता दुष्कृतिहरा दुर्ध्येया दुरतिक्रमा ।।
हंसेश्वरी त्रिकोणस्था शाकम्भर्य्यनुकम्पिनी ।
त्रिकोणनिलया नित्या परमामृतरञ्जिता ।।
महाविद्येश्वरी श्वेता भेरुण्डाकुलसुन्दरी ।
त्वरिता भक्तिसंसक्ता भक्तवश्या सनातनी ।।
भक्तानन्दमयी भक्तभाविका भक्तशङ्करी ।
सर्वसौन्दर्य्यनिलया सर्वसौभाग्यशालिनी ।।
सर्वसंभोगभवना सर्वसौख्यनिरूपिणी ।
कुमारीपूजनरता कुमारीव्रतचारिणी ।।
कुमारीभक्तिसुखिनी कुमारीरूपधारिणी ।
कुमारीपूजकप्रीता कुमारीप्रीतिदा प्रिया ।।

कुमारी सेवकासङ्गा कुमारीसेवकालया ।
आनन्दभैरवी बाला भैरवी वटुभैरवी ॥
श्मशानभैरवी कालभैरवी पुरभैरवी ।
महाभैरवपत्नी च परमानन्दभैरवी ॥
सुधानन्दभैरवी च उन्मादानन्दभैरवी ।
मुक्तानन्दभैरवी च तथा तरुणभैरवी ॥
ज्ञानानन्दभैरवी च अमृतानन्दभैरवी ।
महाभयङ्करी तीव्रा तीव्रवेगा तपस्विनी ।
त्रिपुरा परमेशानी सुन्दरी पुरसुन्दरी ।
त्रिपुरेशी पञ्चदशी पञ्चमी पुरवासिनी ॥
महासप्तदशी चैव षोडशी त्रिपुरेश्वरी ।
महाकुङ्कुशस्वरूपा च महाचक्रेश्वरी तथा ॥
नवचक्रेश्वरी चक्रेश्वरी त्रिपुरमालिनी ।
राजराजेश्वरी धीरा महात्रिपुरसुन्दरी ॥
सिन्दूरपूररुचिराश्री महात्रिपुरसुन्दरी ।
सर्वाङ्गसुन्दरी रक्ता रक्तवस्त्रोत्तरायिणी ॥
जवायावकसिन्दूररक्तचन्दनधारिणी ।
जवायावकसिन्दूररक्तचन्दनरूपधृक् ॥
चामरी बालकुटिलनिर्मलश्यामकेशिनी ।
वज्रमौक्तिकरत्नाढ्य किरीटमुकुटोज्ज्वला ॥
रत्नकुण्डलसंसक्तस्फुरद्गण्डमनोरमा ।
कुञ्जरेश्वरकुम्भोत्थमुक्तारञ्जितनासिका ॥
मुक्ताविद्रुममाणिक्यहाराढ्यस्तनमण्डला ।
सूर्यकान्तेन्दुकान्ताद्यस्पर्शाश्मकण्ठभूषणा ॥

वीजपूरस्फुरद्वीजदन्तपङ्क्तिरनुत्तमा ।
कामकोदण्डकाभुग्नभ्रूकटाक्षप्रवर्षिणी ॥
मातङ्गकुम्भवक्षोजा लसत्कोकनदेक्षणा ।
मनोज्ञशष्कुलीकर्णा हंसीगतिविडम्बिनी ॥
पद्मरागाङ्गदज्योतिर्दोश्चतुष्कप्रकाशिनी ।
नानामणिपरिस्फूर्जच्छुद्धकाञ्चनकङ्कणा ॥
नागेन्द्रदन्तनिर्माणवलयाङ्कितपाणिनी ।
अंगुरीयकचित्राङ्गी विचित्रक्षुद्रघण्टिका ॥
पट्टाम्बरपरीधाना कलमञ्जीरशिञ्जिनी ।
कर्पूरागुरुकस्तूरीकुङ्कमद्रवलेपिता ॥
विचित्ररत्नपृथिवीकल्पशाखितलस्थिता ।
रत्नद्वीपस्फुरद्रक्तसिंहासनविलासिनी ॥
षट्चक्रभेदनकरी परमानन्दरूपिणी ।
सहस्रदलपद्मतान्तश्चन्द्रमण्डलवर्त्तिनी ॥
ब्रह्मरूपशिवक्रोड़नानासुखविलासिनी ।
हरविष्णुविरञ्चीन्द्रग्रहनायकसेविता ॥
शिवा शैवा च रुद्राणी तथैव शिववादिनी ।
मातङ्गिनी श्रीमती च तथैवानन्दमेखला ॥
डाकिनी योगिनी चैव तथोपयोगिनी मती ।
माहेश्वरी वैष्णवी च भ्रामरी शिवरूपिणी ॥
अलम्बुषा वेगवती क्रोधरूपा सुमेखला ।
गान्धारी हस्तिजिह्वा च इडा चैव शुभङ्करी ॥
पिङ्गला ब्रह्मदूती च सुषुम्ना चैव गन्धिनी ।
आत्मयोनिर्ब्रह्मयोनिर्जगद्योनिरयोनिजा ॥

भगरूपा भगस्थात्री भगिनी भगरूपिणी ।
भगात्मिका भगाधाररूपिणी भगमालिनी ।।
लिङ्गाख्या चैव लिङ्गेशी त्रिपुराभैरवी तथा ।
लिङ्गगीतिः सुगीतिश्च लिङ्गस्था लिङ्गरूपधृक् ।।
लिङ्गमानी लिङ्गभवा लिङ्गलिङ्गा च पार्वती ।
भगवती कौशिकीच प्रेमा चैव प्रियंवदा ।।
गृध्ररूपा शिवारूपा चक्रिणी चक्ररूपधृक् ।
लिङ्गाभिधायिनी लिङ्गप्रिया लिङ्गनिवासिनी ।।
लिङ्गस्था लिङ्गिनी लिङ्गरूपिणी लिङ्गसुन्दरी ।
लिङ्गगीतिर्महा प्रीता भगगीतिर्महासुखा ।।
लिङ्गनामसदानन्दा भगनामसदागतिः ।
लिङ्गमालाकण्ठभूषा भगमालाविभूषणा ।।
भगलिङ्गामृतप्रीता भगलिङ्गामृतात्मिका ।
भगलिङ्गार्चनप्रीता भगलिङ्गस्वरूपिणी ।।
भगलिङ्गस्यरूपा च भगलिङ्गसुखावहा ।
स्वयम्भूकुसुमप्रीता स्वयम्भूकुसुमार्चिता ।।
स्वयम्भूकुसुमप्राणा स्वयम्भूकुसुमोत्थिता ।
स्वयम्भूकुसुमस्नाता स्वयम्भूपुष्पतर्पिता ।।
स्वयम्भूपुष्पघटिता स्वयम्भूपुष्पधारिणी ।
स्वयम्भूपुष्पतिलका स्वयम्भूपुष्पचर्चिता ।।
स्वयम्भूपुष्पनिरता स्वयम्भूकुसुमग्रहा ।
स्वयम्भूपुष्पयज्ञांशा स्वयम्भूकुसुमात्मिका ।।
स्वयम्भूपुष्पनिचिता स्वयम्भूकुसुमप्रिया ।
स्वयम्भूकुसुमादानलालसोन्मत्तमानसा ।।

स्वयम्भूकुसुमानन्दलहरीस्निग्धदेहिनी ।
स्वयम्भूकुसुमाधारा स्वयम्भूकुसुमाकुला ॥
स्वयम्भूपुष्पनिलया स्वयम्भूपुष्पवासिनी ।
स्वयम्भूकुसुमस्निग्धा स्वयम्भूकुसुमात्मिका ॥
स्वयम्भूपुष्पकरिणी स्वयम्भूपुष्पपाणिका ।
स्वयम्भूकुसुमध्याना स्वयम्भूकुसुमप्रभा ॥
स्वयम्भूकुसुमज्ञाना स्वयम्भूपुष्पभोगिनी ।
स्वयम्भूकुसुमोल्लासा स्वयम्भूपुष्पवर्षिणी ॥
स्वयम्भूकुसुमोत्साहा स्वयम्भूपुष्परूपिणी ।
स्वयम्भूकुसुमोन्मादा स्वयम्भूपुष्पसुन्दरी ॥
स्वयम्भूकुसुमाराध्या स्वयम्भूकुसुमोद्भवा ।
स्वयम्भूकुसुमव्यग्रा स्वयम्भूपुष्पपूर्णिता ॥
स्वयम्भूपूजकप्रज्ञा स्वयम्भूहोतृमातृका ।
स्वयम्भूदातृरक्षित्री स्वयम्भूरक्ततारिका ॥
स्वयम्भूपूजकग्रस्ता स्वयम्भूपूजकप्रिया ।
स्वयम्भूवन्दकाधारा स्वयम्भूनिन्दकान्तका ॥
स्वयम्भूप्रदसर्वस्वा स्वयम्भूप्रदपुत्रिणी ।
स्वयम्भूप्रदसस्मेरा स्वयम्भूप्रदशरीरिणी ॥
सर्वकालोद्भवप्रीता सर्वकालोद्भवात्मिका ।
सर्वकालोद्भवोद्भावा सर्वकालोद्भवोद्भवा ॥
कुण्डपुष्पसदाप्रीतिर्गोलपुष्पसदारतिः ।
कुण्डगोलोद्भवप्राणा कुण्डगोलोद्भवात्मिका ॥
स्वयम्भू वा शिवा धात्री पावनी लोकपावनी ।
कीर्त्तिर्यशस्विनी मेधा विमेधा शुक्रसुन्दरी ॥

अश्विनी कृत्तिका पुष्या तेजस्का चन्द्रमण्डला ।
सूक्ष्मासूक्ष्मा बलाका च वरदा भयनाशिनी ॥
वरदाभयदा चैव मुक्तिबन्धविनाशिनी ।
कामुका कामदा कान्ता कामाख्या कुलसुन्दरी ॥
दुःखदा सुखदा मोक्षा मोक्षदार्थप्रकाशिनी ।
दुष्टा दुष्टमतिश्चैव सर्वकार्य्यविनाशिनी ॥
शुक्राधारा शुक्ररूपा शुक्रसिन्धुनिवासिनी ।
शुक्रालया शुक्रभोगा शुक्रपूजासदारतिः ॥
शुक्रपूज्या शुक्रहोमसन्तुष्टा शुक्रवत्सला ।
शुक्रमूर्त्तिः शुक्रदेहा शुक्रपूजकपुत्रिणी ॥
शुक्रस्था शुक्रिणी शुक्रसंस्पृहा शुक्रसुन्दरी ।
शुक्रस्नाता शुक्रकरी शुक्रसेव्यातिशुक्रिणी ॥
महाशुक्रा शुक्रभवा शुक्रवृष्टिविधायिनी ।
शुक्राभिधेया शुक्रार्हा शुक्रवन्दकवन्दिता ॥
शुक्रानन्दकरी शुक्रसदानन्दाभिधायिका ।
शुक्रोत्सवा सदाशुक्रपूर्णा शुक्रमनोरमा ॥
शुक्रपूजकसर्वस्वा शुक्रनिन्दकनाशिनी ।
शुक्रात्मिका शुक्रसम्पत् शुक्राकर्षणकारिणी ॥
शारदा साधकप्राणा साधकासक्तमानसा ।
साधकोत्तमसर्वस्वा साधकाभक्तरक्तपा ॥
साधकानन्दसन्तोषा साधकानन्दकारिणी ।
आत्मविद्या ब्रह्मविद्या, परब्रह्मस्वरूपिणी ॥
त्रिकूटस्था पञ्चकूटा सर्वकूटशरीरिणी ।
सर्ववर्णमयी वर्णजपमालाविधायिनी ॥

**श्री शिव उवाच**

इति श्रीकालिकानाम सहस्रं शिवभाषितम् ।
गुह्याद्गुह्यतरं साक्षात् महापातकनाशनम् ॥

पूजाकाले निशीथे च सन्ध्ययोरुभयोरपि ।
लभते गाणपत्यं स यः पठेत् साधकोत्तमः ॥
यः पठेत् पाठयेद्वापि शृणोति श्रावयेदथ ।
सर्वपापविनिर्मुक्तः स याति कालिकापुरम् ॥

श्रद्धयाऽश्रद्धया वापि कश्चिन्मानवः स्मरेत् ।
दुर्गं दुर्गशतं तीर्त्वा स याति परमां गतिम् ॥
बन्ध्या वा काकाबन्ध्या वा मृतवत्सा च याङ्गना ।
श्रुत्वा स्तोत्रमिदं पुत्रान् लभते चिरजीविनः ॥

यं यं कामयते कामं पठन् स्तोत्रमनुत्तमम् ।
देवीपादप्रसादेन तत्तदाप्नोति निश्चितम् ॥
स्वयम्भूकुसुमैः शुक्रैः सुगन्धिकुसुमान्वितैः ।
जपायावकसिंदूररक्तचन्दनसंयुतैः ॥

मत्स्यमांसादिभिर्धीरो मधुभिः साज्य पायसैः ।
भवत्योपनीतैर्मन्त्रेण शोधितैः सह पञ्चमैः ॥
पञ्चोपचारनैवेद्यैर्बलिभिर्बहुशोणितैः ।
धूपदीपैर्महादेवीं पूजयित्वा मनोहरैः ॥

जप्त्वा महामनुस्तोत्रं पठेद् भक्तिसमन्वितः ।
अनन्यचेताः स्थिरधीर्मुक्तकेशी दिगम्बरः ॥

शवारूढश्चितास्थो वा श्मशानालयमागतः ।
शून्यालयगतो वापि शय्यास्थो वा शिवात्मकः ॥

भवेत् कालिकापुत्र इति ख्यातिमुपागतः ।
सर्वविद्यावतांश्रेष्ठो धनेन च धनाधिपः ।।
वायुतुल्यबलो लोके दुर्जयः शत्रुमर्दनः ।
सर्वसङ्कटमुत्तीर्णः सर्वसिद्धिसमन्वितः ।।
मधुमत्या स्वयं देव्या सेव्यमानः स्मरोपमः ।
महेश इव योगीन्द्रः सर्वसत्त्वपुरस्कृतः ।।
कामिनीकामरूपोऽसौ सर्वाकर्षणकारणः ।
जलसूर्य्येन्दुवायूनां स्तम्भको राजवल्लभः ।।
यशस्वी सत्कविर्धीमान् सन्मन्त्री कोकिलस्वरः ।
बहुपुत्री गजाश्वानामीश्वरो धार्मिकः कृती ।।
मार्कण्डेय इवायुष्मान् जरापलितवर्जितः ।
नवयौवनयुक्तः स्यादपि वर्षसहस्रभाक् ।।
बहु किं कथ्यते तस्य पठतः स्तोत्रमुत्तमम् ।
न किंचिद्दुर्लभं लोके यद्यत् मनसि वर्त्तते ।।
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
सर्वमाशु भवत्येव स्तवस्यास्य प्रसादतः ।।
रजस्वलाभगं पश्यन् जप्त्वा कालीं महामनुम् ।
स्तवेनानेन संस्तुत्य साधकः किं न साधयेत् ।।
परदारपरो वापि जप्त्वा मंत्रं पठन् स्तवम् ।
कुबेर इव वित्ताढ्यो जायते साधकोत्तमः ।।
अष्टोत्तरशतं जप्त्वा योनिमामन्त्र्य तत्त्ववित् ।
संगम्य पठनादस्य सर्वविद्येश्वरो भवेत् ।।
दिगम्बरो मुक्तकेशः शय्यास्थो मैथुनी नरः ।
जप्त्वा स्तुत्वा महाकालीं खेचरो जायतेऽचिरात् ।।

शुक्रोत्सारणकाले च जपपूजापरायणः ।
श्मशानकालिकां स्तुत्वा वाणीव सत्कविर्भवेत् ॥
आलोकयन् चिंतयन् वा विवस्त्रां परयोषिताम् ।
जप्त्वा स्तुत्वा महाकालीं सर्वपापैः प्रमुच्यते ॥
सुरतेषु मनुं जप्त्वा स्तुत्वा भगवतीं शिवाम् ।
सर्वपापैः परित्यक्तो मानवः स्यात् शुकोपमः ॥
कुहुपूर्णेन्दुसंक्रातिचतुर्दश्यष्टमीषु च ।
नवम्यां मङ्गलदिने पठेत् स्तोत्रं सुसाधकः ॥
भौमावास्यां निशीथे च चतुष्पथगतो नरः ।
मांसभक्तबलिं दत्वा सदग्धमीनशोणितम् ॥
अष्टोत्तरशतं जप्त्वा पठन्नामसहस्रकम् ।
सोऽदर्शनो भवेदाशु देवगंधर्वसेवितः ॥
येन तेन प्रकारेण कालीस्तुतिपरायणः ।
स्तम्भयेदखिलान् लोकान् राजानमपि मोहयेत् ॥
आकर्षयेद्देवकन्यां वशयेदपि केशवम् ।
मारयेदखिलान् दुष्टानुच्चाटयति शात्रवान् ॥
नरमार्जारमहिषच्छागमूषिकशोणितैः ।
सास्थिमांसैः समधुभिः सौवीरैः दुग्धपायसैः ॥
योनिलक्षणतोयेन भगलिंगामृतेन च ।
शुक्रैः पूजाजपान्ते तु कालीं सन्तर्प्य साधकः ॥
सहस्रनामभिर्दिव्यैः स्तौति भक्तिपरायणः ।
मातेव दक्षिणा तस्य सर्वत्र हितकारिणी ॥
परनिन्दापरद्रोहपरदारपराय च ।
खलाय परतन्त्राय भ्रष्टायासाधकाय च ॥

शिवाभक्ताय दुष्टाय दूषकाय दुरात्मने ।
हरिभक्तिविहीनाय परदारपराय च ।।
पूजाजपविहीनाय स्त्रीसुरानिन्दकाय च ।
न स्तवं दर्शयेद् देवि सन्दर्श्य शिवहा भवेत् ।।
कुलीनाय महोत्साय दुर्गाभक्तिपराय च ।
वैष्णवाय विशुद्धाय भक्तियुक्ताय मन्त्रिणे ।।
अद्वैतानन्दरूपाय निवेदितरताय च ।
दद्यात् स्तोत्रं महाकाल याः साधकाय शिवामया ।।
गुरुविष्णुमहेशानामभेदेन महेश्वरीम् ।
स्वमन्त्रान् भावयेन् मन्त्री महेशः स्यान्न संशयः ।।
स शाक्तः शिवभक्तश्च स एव वैष्णवोत्तमः ।
संपूज्य स्तौति यः कालीमद्वैतभावमावहन् ।।
देव्यानन्देन सानन्दो देवीभक्तेन भक्तिमान् ।
स एव धन्यो यस्यार्थे महेशो व्यग्रमानसम् ।।
कामयित्वा यथाकामं स्तवमेनमुदीरपेत् ।
सर्वरोगविनिर्मुक्तो जायते मदनोपमः ।।
चक्रं वा स्तवमेनं वा धारयेदङ्गसङ्गतम् ।
विलिख्य विधिवत् साधुः स एव कालिका तनुः ।।
देव्यै निवेदितं यद्यत् तस्यांशं भक्षयेन्नरः ।
दिव्यदेहधरो भूत्वा देव्याः पार्श्वचरो भवेत् ।।
नैवेद्यनिन्दकं दृष्ट्वा नृत्यन्ति योगिनीगणाः ।
रक्तपानोद्यताः सर्वे मांसास्थिवर्धणोद्यता ।।
तस्मान्निवेदितं देव्यै दृष्ट्वाश्रुत्वा च मानवः ।
न निन्देत् मनसा वाचा सर्वव्याधिपराङ्मुखः ।।

आत्मानं कालिकात्मानं भावयन् स्तौति यः शिवाम् ।
शिवोपमं गुरुं ध्यात्वा स एव श्रीसदाशिवः ॥
यस्यालये तिष्ठति नूनमेतत् स्तोत्रं भवान्या लिखितं विधिज्ञैः ।
गोरोचनालक्तककुंकुमाक्त सिन्दूरकर्पूरमधुद्रवेण ॥
न तस्य चौरस्य भयं न दस्योर्मनोरथो नाशनिवह्निभीतिः ।
उत्पातवायोरपि नात्र शङ्का लक्ष्मीः स्वयं तत्र वसेदलोला ॥
स्तोत्रं पठन्नेतदनन्तपुण्यं कालीपदाम्भोजपरो मनुष्यः ।
विधानपूजाफलेन सम्यक् प्राप्नोति संपूर्णमनोरथोऽसौ ॥
मुक्ताः श्रीचरणारविन्दविमुखाः स्वर्गामिनो भोगिनो ।
ब्रह्मोपेन्द्रशिवात्मिकार्चनसुखं लोकेप्सिनों लेभिरे ॥
श्रीमत्सद्गुरुभक्तिपूर्वकमहाकालीपदध्यायिनो ।
भुक्तिर्मुक्तिस्वयं स्तुतिपरा मुक्तिः करस्थायिनी ॥

**इति कालिकाकुलसर्वस्वे हररामसंवादे कालिकासहस्र**

**नामस्तोत्रं समाप्तम् :।**

# शुद्धिपत्रम्

| पृष्ठाङ्काः | पंक्तिसंख्या | अशुद्धपाठः | शुद्धः पाठः |
|---|---|---|---|
| २ | १५ | गुरु र्ब्रह्मा | गुरुर्ब्रह्मा |
| २ | १८ | स्वोकृतानेक विग्रह | स्वोकृतानेक विग्रहः |
| ३ | २० | महारसरसोल्लास हृदया | महारसरसोल्लासहृदयाः |
| ३ | २१ | कुलालिङ्गान्नसंभिन्ना | कुललिङ्गान्नसंभिन्नाः |
| ५ | २२ | नृत्योत्सवालङ्कृतीम् | नृत्योत्सवालङ्कृतीम् । |
| ६ | १३ | द्विव्यवारिणा | दिव्यवारिणा |
| ७ | १९ | सुगन्धीश्वेतलोहित्यं | सुगन्धां श्वेतलोहित्यां |
| ८ | ८ | सहस्रं | सहस्र |
| १२ | ४ | सन्तु | शन्न |
| १३ | ५ | रहस्य मयि | रहस्यमपि |
| १३ | ११ | भावयेद | भावयेद् |
| १४ | ६ | श्रीमन्दक्षिणकालिकायै | श्रीमद्दक्षिणकालिकायै |
| १४ | ८ | ऊर्ध्वं षाहुः | ऊर्ध्ववाहुः |
| १५ | ३ | शक्तिपेक्ष्य | यथाशक्ति |
| १८ | १५ | तद्वाराद्वहिः | तद्द्वाराद्वहिः |
| २० | ७ | मेरुपृष्ठ | मेरुपृष्ठः |
| २० | १४ | महाप्रेति | महाप्रेते |
| २२ | ४ | पाशाङकुशां | पाशाङ्कुशां |
| २२ | १४ | राजा प्रजा | राजप्रजा |
| २३ | ४ | वाह्निना | वह्निना |
| २३ | ७ | तत्रत्पुत्र | तत्तत्पुत्र |
| २३ | ११ | पिरिविष्य | परिविष्य |

| पृष्ठाङ्कः | पंक्तिसंख्या | अशुद्धपाठः | शुद्धः पाठः |
|---|---|---|---|
| २३ | २५ | मयामोह | मायामोह |
| २४ | ११ | साधकेभ्य: स्तेयतां मूले | साधकेभ्यस्तोयताम्बूले |
| २५ | ७ | विघिन्यै | विधिन्यै |
| २६ | २२ | प्रकृतिः | प्रकृति |
| ३० | ७ | लोचनाम्भोज | लोचनाम्भोज |
| ३० | ६ | मुद्राख्या | मुद्राख्य |
| ४० | ११ | देवते | दैवते |
|  | १८ | सत्कुमारीयात् | सनत्कुमारीयात् |
| ४४ | १८ | रह्मौः | स्हौः |
| ४७ | ६ | भूषिरम् | भूषितम् |
| ४७ | ११ | पाशङ्कुश | पाशाङ्कुश |
| ४८ | शीर्षक २ | शुद्धयादि | शुद्ध्यादि |
| ५३ | ११ | विाद्यये | विद्यायै |
| ५४ | १ | त्तीर्थान्यावववाह्य | त्तीर्थान्यावाह्च |
| ५६ | ५ | त्रैव | तत्रैव |
| ५८ | ६ | मेन्द्रो | मे इन्द्रो |
| ५८ | १८ | पूर्वादिस्थ | पूर्वादिस्थं |
| ६० | ३ | वलि | वलि |
| ६० | १२ | ग्रहाः । | ग्रहा— |
| ६२ | १ | दिदिक्षु | विदिक्षु |
| ६२ | ४ | गृह्णान्त्विमं | गृह्णन्त्विमं |
| ६३ | १३ | शेषाङ्ली तु | शेषाङ्गुलीस्तु |
| ६३ | २१ | तजन्या | तर्जन्या |
| ६४ | ६ | इदमर्ध्यं | इदमर्घ्यं |
| ६४ | १५ | ततस्तत्व | ततस्तत्त्व |

| पृष्ठाङ्काः | पंक्ति संख्या | अशुद्धपाठः | शुद्धः पाठः |
|---|---|---|---|
| ६७ | १ | रक्तमाल्यांवरमूष | रक्तमाल्याम्बरमूल |
| ६८ | १४ | विभूषणाः । | विभूषणा– |
| ६९ | १८ | हंस समा | हंसमा |
| | | स्वर्णावर्णी | स्वर्णवर्णी |
| ६९ | १९ | ब्रह्मकूर्च | ब्रह्मकूर्चं |
| ७० | १८ | लृ | लृं |
| ७० | २६ | नारसिंहो | नारसिंही |
| ७१ | ४ | करदण्डी | करदण्डो |
| ७२ | ६ | पजयामि | पूजयामि |
| ७२ | १३ | अघश्चक्र | अधश्चक्र |
| ७२ | २० | ऊर्ध्व | ऊर्ध्वं |
| ७३ | ७ | सौरम्य | सौरभ्य |
| ७५ | शीर्षक २ | अथारार्तिक्यम् | अथारात्रिकम् |
| ७६ | २ | आरार्तिकमिदं | आरात्त्रिकमिदं |
| ७६ | शीर्षक १ | इत्यारार्तिक्यम् | इत्यारात्रिकम् |
| ७८ | ६ | प्राणयोगः | प्राणयोगं |
| ७९ | १२ | न्यस्तस्मात्त्वं | न्यस्तस्तस्मात्त्वं |
| ८१ | १२ | भैरवी | भैरवि |
| ८२ | १३ | कुर्यादति | कुर्यादिति |
| ८४ | १३ | जुहोम्यहम | जुहोम्यहम् |
| ८५ | ९ | संजपन्न | संजपन्नतु |
| ८५ | १३ | क्रृति | क्रृतिं |
| ८५ | २१ | मन्यन्यत् | मन्यत् |
| ८७ | १५ | योगिनां | योगिनीनां |
| ९१ | १७ | मानोति | माप्नोति |

| पृष्ठाङ्कः | पंक्तिसंख्या | अशुद्धपाठः | शुद्धः पाठः |
|---|---|---|---|
| ९२ | ९ | य | यं |
| १०२ | १५ | प्रयोगोऽपि | प्रयोगमपि |
| १०८ | ५ | एद्यान्ते | एघान्ते |
| ११० | २१ | पल्लवरय | पल्लवस्य |
| ११२ | १ | पूर्णोदर्यांद्यीनां | पूर्णोंदर्यांद्यानां |
| ११२ | १७ | सवीकार्यः | स्वीकार्यः |
| ११३ | १ | तमुपस्थापयामिः | तमुपस्थापयामि |
| ११४ | २१ | जधन | जघन |
| ११५ | १७ | कालिकाः | कालिकायाः |
| ११६ | ५ | ब्रह्मार्चा | ब्रह्मर्चा |
| ११७ | शीर्षक २ | शूद्धयादि | शुद्धचा |
| १२२ | ४ | पूयते | पूर्यते |
| १२२ | पा० टि० | र्घ्यं | र्घ्यं |
| १२६ | १५ | वलायां | वगलायां |
| १२७ | १७ | साम्बर | शावर |
| १२८ | १८ | म्ठ | ष्ठ |
| १२८ | २० | माष्ठम् | काष्ठम् |
| १२९ | १ | वत्कलं | वल्कल |
| १२९ | ४ | रीय केवलं | रीयं केवलं |
| १२९ | १४ | शत्या | संख्या |
| १३१ | १ | यं | यँ |
| १३२ | १२ | कताञ्जलि | कृताञ्जलि |
| १३४ | ५ | अग्नये | अग्नये |
| १३५ | ११ | कूलात्मनः | कूलमात्मनः |
| १३५ | १६ | वान्धवा– | वान्धवां- |

| पृष्ठाङ्काः | पंक्तिसंख्या | अशुद्धपाठः | शुद्धः पाठः |
|---|---|---|---|
| १३५ | १८ | मात्रपूर्णा | पूर्णा |
| १३८ | ५ | भुक्त | भुक्ति |
| १३८ | १६ | जफलं | हि जपनं |
| १३९ | १ | वासरे | वसरे |
| १४० | ६ | निगदितमः | निगदितः |
| १४१ | ४ | ज्योतिर्व | ज्ज्योतिर्व |
| १४२ | १ | किरणाश्चतु | किरणानि चतु |
| १४४ | १२ | क्षित्यप | क्षित्यप् |
| १४५ | १२ | स्वपुष्पं | स्वपुष्पं |
| १४७ | ६ | द्रूव | द्रूवं |
| १५० | पा० टि० | Zantra | Tantra |
| १५५ | ९ | किश्च | किञ्चि |
| १५६ | १२ | कपाटवत | कपाटवत् |
| १५९ | १ | मानुषीं | मानुषी |
| १६२ | २ | सः | सा |
| १६५ | ७ | गुम्पित | गुम्फित |
| १८२ | ६ | र्ध्यं | र्घ्यं |